प्रियंवदे नृपो यावदभिज्ञानं न पश्यति ।
इति कृत्वा स शापान्तं गृहीत्वा सत्क्रियां ययौ ॥२८॥
अथ तस्यास्तदा गर्भो राजर्षेस्तेजसा भृतः ।
शशीव विशदे पक्षे वर्धते स्म दिने दिने ॥२९॥
कण्वोऽपि भगवान् दृष्ट्वा दोहदं समुपस्थितम् ।
मुदा परमया युक्तः पृष्ट्वाऽभिलषितं हितम् ॥
सम्भावयति वन्यानि मूलानि च फलानि च ॥३०॥
अथ तां सप्तमे मासि गर्भे स्फूर्तिमुपेयुषि ।
उवाच भगवान् कण्वो मुनिमण्डलमध्यगाम् ॥३१॥
कन्या पितृगृहे नैव सुचिरं वासमर्हति ।
लोकापवादः सुमहान् जायते पितृवेश्मनि ॥३२॥
नार्याः पतिर्गतिर्भर्ता तपश्च परमं पतिः ।
दैवतं गुरुरार्यश्च पतिः स्त्रीणां परं पदम् ॥३३॥
यं प्रसोष्यसि देवि त्वं भविता स महाबलः ।
राजपुत्रो वने स्थास्यत्ययं नाप्युचितो विधिः ॥३४॥
अतस्त्वां प्रेषयिष्यामि निकटं तस्य भूभृतः ।
पत्युः प्रेमा हि नारीणां परं सौभाग्यमुच्यते ॥३५॥

शकुन्तलोवाच

पितस्तेऽनुगृहीतास्मि पतिदर्शनवार्तया ।
नानुज्ञां प्रार्थये तुभ्यं स्नेहभंगभयात् तव ॥३६॥
न जाने को मया गर्भे धृतोऽयं पुरुषोत्तमः ।
यत्तेजसा न शक्नोमि स्थातुमेकत्र मारिष ॥३७॥

---

३०f : मृणालिनी फलानि च G
३२a : चैव D
३४a : प्रपोष्यसि A
३५b : भूपतेः BF
३५c : पतिप्रेमा A
३७ab : को धृतो गर्भे ममायम् C
३७b : पुरुषोत्तम D

तदद्यैव गमिष्यामि राजर्षेस्तस्य चान्तिकम् ।
अनुज्ञां देहि मे तात कृपया तापसोत्तम ॥३८॥
तच्छ्रुत्वा भगवान् कण्वः स्नेहप्रसवविप्लुतः ।
अनुज्ञाप्य मुनीनन्यान् मुनिपत्नीश्च सुव्रताः ॥३९॥
उवाच परया प्रीत्या प्रेषयामि शकुन्तलाम् ।
भर्तुर्गृहाय कल्याण्यः कल्याणं कुरुते ध्रुवम् ॥४०॥
ताश्च वाक्यं मुनेः श्रुत्वा प्रेमाश्रुक्लिन्नलोचनाः ।
आशीभिरनुकूलाभिः प्रायुञ्जत शकुन्तलाम् ॥४१॥
विचित्रैरप्याभरणैः केशबन्धादिभिस्तथा ।
गात्रोद्वर्तनसंमार्ष्टि हरिद्रातैलसंगतैः ।
भूषयामासुरव्यग्रां मुनिपत्न्यः शकुन्तलाम् ॥४२॥
शुशुभे सा महाभागा विश्वामित्रसुता सती ।
नितरां गर्भिणी बाला चन्द्रलेखेव विच्युता ॥४३॥
अथ गुल्मलतावृक्षान् हरिणान् हरिणाङ्गनाः ।
उवाच कण्वः प्रेमार्द्रो मुञ्चन्नश्रुकणा मुहुः ॥४४॥
युष्माकं परमप्रेम्णा वासितेयं सुता मम ।
सर्वे कुरुत कल्याणं सुखं यातु शकुन्तला ॥४५॥
इति सर्वाननुज्ञाप्य कण्वो मतिमतां वरः ।
आहूय गौतमीं वृद्धां सखीं चास्याः प्रियंवदाम् ।
उवाच श्लक्ष्णया वाचा शिष्यौ चापि महाव्रतौ ॥४६॥
यात यूयं महीभर्तुर्दुष्मन्तस्य पुरं प्रति ।
इमां शकुन्तलां राज्ञि समर्प्य पुनरेष्यथ ॥४७॥

---

३८a : तदाद्यैव G
३९a : तत् श्रुत्वा Ce H
४१b : °लोचनः F
४४d : अश्रुकला BFH
४६-४८a : not found in G

इति तस्य वचः श्रुत्वा गौतमी च प्रियंवदा ।
मुनिः साङ्गवरः शिष्यस्तथा शारद्वतो मुनिः ॥४८॥
तथेति प्रतिगृह्याथ मुनेराज्ञां स्वमूर्धसु ।
शकुन्तलां पुरस्कृत्य पन्थानं प्रतिपेदिरे ॥४९॥
अथ दक्षिणतस्तस्याः शिवा घोरं ववाशिरे ॥
मृगाश्च चेलुः सव्येन वाता वान्ति स्म धूसराः ॥५०॥
तदालोक्य समुद्विग्ना पथि यान्ती शकुन्तला ।
नितम्बिनी गर्भसत्त्वा न शेके चलितुं द्रुतम् ॥५१॥
अथ मध्याह्नसमये प्राप्य प्राचीं सरस्वतीम् ।
मुनेः शिष्यौ च मध्याह्नक्रियां चक्रतुरेव तौ ॥५२॥
प्रियंवदा गौतमी च सलिलं तत्जगाहतुः ।
शकुन्तलापि तत्रैव स्नानार्थमुपचक्रमे ॥५३॥
प्रियंवदाकरे न्यस्य अभिज्ञानाङ्गुरीयकम् ।
स्नातुं सरस्वतीतोयमगाहत सुलोचना ॥५४॥
प्रियंवदा तु तद् गृह्य वसनाञ्चलमध्यतः ।
यावन्न्यस्तवती तावत् पपात सलिले द्विज ॥५५॥
प्रियंवदा भिया तस्यै वृत्तान्तं न न्यवेदयत् ।
शकुन्तलापि तत् सख्यै पप्रच्छापि न विस्मृता ॥५६॥
ततः स्नात्वा च ते सर्वे समाप्य विधिवत् क्रियाम् ।
दुष्मन्तपुरमासेदुस्तास्त्रयस्तौ च तापसौ ॥५७॥

इति श्रीपद्मपुराणे स्वर्गखण्डे शाकुन्तले द्वितीयोऽध्यायः ॥२॥

---

४८c : शारङ्गव F
४९b : स्वमूर्धनि AF
५०d : स्म not found in G
५१b : पति यान्ती AF
५२c : मध्याह्ने C
५४c : °तोये B
५६d : विस्मिता A
पुष्पिका : इत्यादि महापुराणे पाद्मे A शकुन्तलोपाख्याने BCH शकुन्तलोपाख्याने स्वर्गखण्डे G

## ३

शेष उवाच

राजद्वारं समासाद्य कण्वशिष्यौ महामते ।
ऊचतुस्तौ प्रतीहारं तूर्णं राज्ञे निवेदय ॥१॥
काश्यपस्य निदेशेन राजद्वारमिहागतौ ।
शिष्यौ तस्य  साङ्गवरशारद्वतसमाभ्ययौ ॥२॥
सुता तस्य च कल्याणि द्वे अन्ये च द्विजस्त्रियौ ।
प्रतीहारस्ततो गत्वा राज्ञे सर्वं न्यवेदयत् ॥३॥
राजा पुरोधसं प्राह गौतमं हृदि चिन्तयन् ।
कथमेतौ मुनेः शिष्यौ स्त्रीभिरेताभिरावृतौ ॥४॥
आगताविह संप्राप्तौ भवानेव हि पृच्छतु ।
किं कण्वस्याश्रमे कश्चिद् राक्षसः कुरुतेऽनयम् ॥५॥
न जानाति स दुष्टात्मा दुष्मन्तं राक्षसान्तकम् ।
किं वने पशवस्त्यक्ता नियमं मुनिना कृतम् ॥६॥
बाधन्ते व्याघ्रसिंहाद्याः स्त्रियो बालान् जरायुतान् ।
मृगयापि मया तावन्न कृता पुरवासिना ॥७॥
किं वा वन्यफलान्यद्य प्रभवन्ति न कानने ।
तेनाहारविनाभावाद् दुःखितास्ते तपोधनाः ॥८॥
यद्यापतितं घोरं मुनीनां दुःखकारणम् ।
विधुनोमि तदद्यैव याहि पृच्छ तपोधनौ ॥९॥

---

५b : तु A
५d : कुरुते लयम् D
६a : हि (for म) Ce GH
७c : तावत् ACe
८a : किं चारण्यफलान्य A कि वारण्यफलान्न H

पाद्यादीनि पुरस्कृत्य विधायातिथिसत्क्रियाम् ।
वासयस्व मुनी विप्र स्वगृहे तास्त्रियस्तथा ॥१०॥
चेद् विशेषविवक्षापि तयोरस्ति विबुध्य तत् ।
विज्ञापयिष्यसि पुनस्तद् विचार्य करोम्यहम् ॥११॥

शेष उवाच

इति तद्वाक्यमादाय पुरोधाः स तपोधनः ।
पाद्यादीनि पुरस्कृत्य द्वारमागतवान् द्विज ॥१२॥
राज्ञोक्तं सर्वमाचष्ट ददर्श च शकुन्तलाम् ।
अन्तःसत्त्वां महाभागां शिरः प्रच्छाद्य वाससा ।
अधोमुखीं चन्द्रकलामिव दीप्तिमतीं पुरः ॥१३॥
पप्रच्छ च मुनी केयं सुन्दरी जगदद्भुता ।
अन्तःसत्त्वेव कल्याणी लज्जयाधोमुखी स्थिता ॥१४॥

शिष्यावूचतुः

विश्वामित्रसुता चेयं मेनकागर्भसम्भवा ।
कण्वेन पालिता राज्ञी दुष्मन्तस्य महीपतेः ॥१५॥
सेयं संप्रेषिता ब्रह्मन् कण्वेन नृपमन्दिरम् ।
अस्यैव भूपतेस्तेजो बिभ्रती मृगलोचना ॥१६॥
राज्ञे निवेदयत्वद्य तद् भवांस्त्वरया द्विज ।
नेयं राज्ञी द्वारदेशे स्थातुमर्हा महीपतेः ॥१७॥

शेष उवाच

पुरोधास्तदुपाकर्ण्य सम्भ्रमेण महीपतिम् ।
गत्वा निवेदयामास वृत्तान्तं मुनिभाषितम् ॥१८॥
दुष्मन्तस्तदुपश्रुत्य विस्मृतिं परमां गतः ।
उवाच ब्राह्मणं ब्रह्मन् वचसा कटुना नृपः ॥१९॥

---

१०a : पुरस्कृत्वा eGH

१७b : भवान् त्वरया A

नैवं स्मरति मच्चेतः कुत्र का मे विवाहिता ।
गणिका कापि विप्रेन्द्र छलेन समुपागता ॥२०॥

गौतम उवाच

न तथा दृश्यते राजन् अन्तःसत्त्वा वराङ्गना ।
अनुजानीहि राजेन्द्र त्वदन्तिकमुपानये ॥२१॥
विलोकय परं रूपं यदि ते स्मृतिरुद्भवेत् ।
प्रवेशनीया शुद्धान्ते नारी श्रीरिव रूपिणी ॥
स्थातुमर्हा न च द्वारि द्योतयन्ती दिशस्त्विषा ॥२२॥
यदि नापि स्मृतिस्ते स्यात् तद्रूपं तु तथापि ते ।
विलोक्य भविता नान्यरूपदर्शनलालसा ॥२३॥
इति राज्ञानुनीतेनाभ्यनुज्ञातो द्विजोत्तमः ।
आनाययामास मुनी ताः स्त्रियश्च सुलक्षणाः ॥२४॥
आशीर्भिरनुयोज्याथ कण्वशिष्यौ महामती ।
ऊचतुः कण्वसन्देशं निषण्णौ जगतीपतिम् ॥२५॥

शिष्यावूचतुः

त्वामाशिषा वर्धयित्वा प्राह त्वामावयोर्गुरुः ।
तच्छृणुष्व महाराजानन्तरं कर्तुमर्हसि ॥२६॥
इयं शकुन्तला नाम विश्वामित्रसुताऽनघ ।
मेनकासंगमाज्जाता पालिता दुहिता मम ॥२७॥
मृगयाचारिणारण्ये गान्धर्वेण महीपते ।
विधिना यद् गृहीताभून्ममानुज्ञां विनापि हि ॥२८॥
तत् साधुविहितं मन्ये क्षत्रियाणामयं विधिः ।
तव सा बिभ्रती तेजो वस्तुं नार्होटजे मम ॥२९॥

---

२३b : तदापि ते A
२६c : तत् शृणुष्व CeH
२७c : °संगताज्° F
२८c : गृहीताभूत् D
२९b : क्षत्रियस्य ह्ययं A
२९d : नार्हा ममोटजे A

महिषी राजराजस्य साक्षाच्छ्रीरिव रूपिणी ।
सेयं प्रगृह्यतां राजन् कल्याणी महिषी तव ॥३०॥
जनयिष्यति यं पुत्रमियं राज्ञी शकुन्तला ।
चक्रवर्ती राजराजो महात्मा स भविष्यति ॥३१॥
इत्याशिषा नियुज्य त्वां गुरुराह महातपाः ।
इयं प्रियंवदा नाम सखी चास्या मुनेः सुता ॥३२॥
इयं च ब्राह्मणी वृद्धा राजन् गौतमवंशजा ।
राजन् वयमिहायाता अनया गुरुवाक्यतः ॥३३॥

राजोवाच

कति सन्तीह गणिका भ्रमन्ति कामसेवया ।
राजराजस्य महिषी का नो भवितुमिच्छति ॥३४॥
ब्राह्मणाः विविधाः सन्ति तापसच्छद्मरूपिणः ।
तासामनुग्रहेणैव समं ताभिर्भ्रमन्ति च ॥३५॥
भुञ्जते विपुलान् भोगान् गणिकाभिरुपार्जितान् ।
निशम्य नृपतेर्वाक्यं शिष्यौ कण्वस्य तापसौ ॥३६॥
शेपतुर्विरहेणास्याः पश्चात्तापमवाप्स्यसि ।
इत्युक्त्वा तौ गतौ क्रुद्धौ तापसौ ब्रह्मवादिनौ ॥३७॥
गौतमस्तौ प्रसाद्याथावासयत् स्वे च वेश्मनि ।
अथ सा गौतमी वृद्धा जगाद जगतीपतिम् ॥३८॥

---

३०b : साक्षात् श्रीरिव GH
३४b : भ्रमन्ते G
३५b : तापसश्छद्म° D
३५d : हि C
३८b : वासयेत् A
३८b : मन्दिरे A
३८c ; तौ D

नैवमर्हसि भो राजन् विश्वामित्रसुतां प्रति ।
एवं लावण्यमापन्ना क्व दृष्टा गणिका त्वया ॥३९॥
अन्तःसत्त्वा महाभागा त्वया राजन् विवाहिता ।
समाहितेन मनसा स्मर पश्य च सुन्दरीम् ।
इत्युक्त्वा मोचयामास शिरश्छादनमम्बरम् ॥४०॥

राजोवाच

पौरवाणां कुले जाताः सतां मार्गे कृतासनाः ।
न वयं रूपमात्रेण गणिकानां भ्रमामहे ॥४१॥
एवं वदति भूपाले व्रीडितेव मनस्विनी ।
निःसंख्येन च दुःखेन तस्थौ स्थूणेव निश्चला ॥४२॥
संरम्भामर्षताम्राक्षी स्फुरमाणौष्ठसंपुटा ।
कटाक्षैर्निर्दहन्तीव तिर्यग्राजानमैक्षत ॥४३॥
आकारं गूहमाना च मन्युनातिसमीरितम् ।
तपसा संभृतं तेजो धारयामास वै तदा ॥४४॥
सा मुहूर्तमिव ध्यात्वा दुःखामर्षसमन्विता ।
भर्तारमभिसंप्रेक्ष्य क्रुद्धा राजानमब्रवीत् ॥४५॥
कथं न स्मरसे राजन् मृगयामधिगच्छता ।
गान्धर्वेण गृहीतो यत् पाणिर्मे विधिना नृप ॥४६॥
इति श्रुत्वा तु वचनं शापेनास्तमितस्मृतिः ।
अब्रवीन्न स्मरामि त्वां कस्य त्वं दुष्टतापसी ॥४७॥
धर्मकामार्थसम्बन्धं न स्मरामि त्वया सह ।
गच्छ वा तिष्ठ वा कामं यद्वापीच्छसि तत् कुरु ॥४८॥

---

३९d : गणिकात्मजा C
४२d : निस्फला G
४४a : गूहयन्ती A
४६c : गृहीतोऽयम् C
४७c : स्मरामीति BF

शकुन्तलोवाच

कुतः प्रियंवदे साध्वि अभिज्ञानमिहानय ।
धूर्तमेनं सभामध्ये हेपयामि नराधिपम् ॥४९
इत्युक्त्वा पाणिमुत्क्षिप्य भूयोभूयः प्रियंवदाम् ।
उवाच देहि देहीति हेपयामि नराधिपम् ॥५०॥
प्रियंवदा तु नीचैस्तां जगाद मृगलोचनाम् ।
कर्णान्तिके समासाद्य पतितं ते तदम्भसि ॥५१॥
तदुपश्रुत्य कल्याणी रम्भेव मरुता हता ।
पपात भूमौ निश्चेष्टा हा हतास्मीति वादिनी ॥५२॥
अथ तां गौतमी वृद्धा बाहुभ्यां मृगलोचनाम् ।
आश्लिष्य सान्त्वयामास लेभे संज्ञां ततः पुनः ॥५३॥
अथ क्रुद्धा महाभागा सख्यै राज्ञे च भामिनी ।
उवाचाश्रूणि संमार्ज्य स्मरन्ती पितरं मुनिम् ॥५४॥
जानन्नपि महाराज कस्मादेवं प्रभाषसे ।
न जानामीति निःशंकं यथान्यः प्राकृतो जनः ॥५५॥
अथ ते हृदयं वेद सत्यस्यैवानृतस्य वा ।
कल्याणं वद साक्ष्येण मात्मानमवमन्यथाः ॥५६॥
योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥५७॥
एकोऽहमस्मीति च मन्यसे त्वं
न हृच्छयं वेत्सि मुनिं पुराणम् ।
यो वेदिता कर्मणः पापकस्य
यस्यान्तिके त्वं वृजिनं करोषि ॥५८॥

---

५४b : भाविनि F
५६c : कल्पनम् AGH
५७d : चौरेणात्मापकारिणा AF

मन्यते पातकं कृत्वा कश्चिद् वेत्ति न मामिति ।
विदन्ति चैनं देवाश्च स्वस्यैवान्तरपूरुषः ॥५९॥
आदित्यचन्द्रावनिलोऽनलश्च ।
द्यौर्भूमिरापो हृदयं यमश्च ॥
अहश्च रात्रिश्च उभे च सन्ध्ये ।
धर्मोऽपि जानाति नरस्य वृत्तम् ॥६०॥
यमो वैवस्वतस्तस्य निर्यातयति दुष्कृतम् ।
हृदि स्थितः कर्मसाक्षी क्षेत्रज्ञो यस्य तुष्यति ॥६१॥
न तु तुष्यति यस्यैष पुरुषस्य दुरात्मनः ।
तं यमः पापकर्माणं निर्यातयति दुष्कृतम् ॥६२॥
योऽवमन्यात्मनात्मानमन्यथा प्रतिपद्यते ।
न तस्य देवाः श्रेयांसो यस्यात्मापि न कारणम् ॥६३॥
स्वयं प्राप्तेति मामेवं मावमंस्थाः पतिव्रताम् ।
अर्चार्हां नार्चयसि मां स्वयं भार्यामुपस्थिताम् ॥६४॥
किमर्थं मां प्राकृतवदुपप्रेक्षसि संसदि ।
न खल्वरण्ये रुदितमस्तु मे शृणु भाषितम् ॥६५॥
यदि मे याचमानाया वचनं न करिष्यसि ।
कण्वशापेन ते मूर्धा शतधैव फलिष्यति ॥६६॥
भार्यां पतिः समाविश्य यज्जायेत नराधिप ।
जायायास्तद्धि जायात्वं पौराणाः कवयो विदुः ॥६७॥

---

५९b : कश्चित् F न कश्चिद् वेत्ति मामिति H
६१a : वैवस्वतश्चास्य A
६५b : सम्प्रति AF
६६d : शतधा वै C
६७a : प्रति D
६७c : तद् वै G
६७d : पुराणा : G

यदागमवतः पुंसस्तदपत्यं प्रजायते ।
तत्तारयति संतत्या पूर्वप्रेतान् पितामहान् ॥६८॥
पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः ।
तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥६९॥
मुनिनाऽभिहिता चाहं तव पुत्रो भविष्यति ।
राजराजश्चक्रवर्ती न तन्मिथ्या भविष्यति ॥७०॥
सा भार्या या गृहे दक्षा सा भार्या या प्रजावती ।
सा भार्या या पतिप्राणा सा भार्या या पतिव्रता ॥७१॥
अर्धं भार्या मनुष्यस्य भार्या श्रेष्ठतमः सखा ।
भार्या मूलं त्रिवर्गस्य भार्या मूलं च सन्ततेः ॥७२॥
भार्यावन्तः क्रियावन्तः सभार्या गृहमेधिनः ।
भार्यावन्तः प्रमोदन्ते भार्यावन्तः श्रियान्विताः ॥७३॥
सखायः प्रविविक्तेषु भवन्त्येताः प्रियंवदाः ।
पितरो धर्मकार्येषु भवन्त्यार्तस्य मातरः ॥७४॥
कान्तारेष्वपि विश्रामो जनस्याध्वनिकस्य वै ।
यः सदारः स विश्रान्तस्तस्माद् दाराः परा गतिः ॥७५॥
संसरन्तमपि प्रेतं विषमेष्वेकपातिनम् ।
भार्यैवान्वेति भर्तारं सन्ततं या पतिव्रता ॥७६॥
प्रथमं संस्थिता भार्या पतिं प्रेत्य प्रतीक्षते ।
पूर्वं मृतं च भर्तारं पश्चात्साध्व्यनुगच्छति ॥७७॥

---

७०a : पूर्वम् A
७३d : प्रियान्विताः A
७४d : आर्तेषु C
७५c : परिश्रान्तः ACFG
७६a : संवसन्तम् AF
७६b : विषयेष्व° AF
७६c : भार्यावानेति G
७७a : संहिता AF

एतस्मात् कारणाद् भूप पाणिग्रहणमिष्यते ।
यदाप्नोति पतिर्भार्या इह लोके परत्र च ॥७८॥
आत्मात्मनैव जनितः पुत्र इत्युच्यते बुधैः ।
तस्माद् भार्यां नरः पश्येन्मातृवत् पुत्रमातरम् ॥७९॥
भार्यायां जनितं पुत्रमादर्शेष्विव चाननम् ।
ह्लादते जनिता प्रेक्ष्य स्वर्गं प्राप्येव पुण्यकृत् ॥८०॥
दह्यमाना मनोदुःखैर्व्याधिभिश्चातुरा नराः ।
ह्लादन्ते स्वेषु दारेषु घर्मार्ताः सलिलेष्विव ॥८१॥
सुसंरब्धोऽपि रामाणां न कुर्यादप्रियं नरः ।
रतिं प्रीतिं च धर्मं च तास्वायत्तमवेक्ष्य हि ॥८२॥
आत्मनो यन्मनः क्षेत्रं पुण्यं रामाः सनातनम् ।
ऋषीणामपि का शक्तिः स्रष्टुं रामामृते प्रजाः ॥८३॥
परिपत्य यथा सूनुर्धरणीरेणुगुण्ठितः ।
पितुराश्लिष्यतेऽङ्गानि किमस्त्यभ्यधिकं ततः ॥८४॥
वरं प्रसूय पुत्रं ते विधाय च सुखं तव ।
गमिष्यामि महाराज कण्वस्य पितुराश्रमम् ॥८५॥
अण्डानि बिभ्रति स्वानि न विन्दन्ति पिपीलिकाः ।
न भरेथाः कथं नु त्वं धर्मज्ञः सन् स्वमात्मजम् ॥८६॥
न वाससां न रामाणां नापां स्पर्शस्तथाविधः ।
शिशोरालिङ्गमानस्य स्पर्शः सूनोर्यथा सुखः ॥८७॥

---

७८a : कारणान् Ae F G H
७९c : तस्मात् F G
७९c : पश्येत् D
८०d : प्राप स A
८१d : घर्मात्मा A
८३a : क्षेत्रं not found in G
८४b : °लुण्ठितः A
८६c : न (for नु) GH
८६d : स्वयम् (for सन् स्वम्) G

ब्राह्मणो द्विपदां श्रेष्ठो गौर्वरिष्ठश्चतुष्पदाम् ।
गुरुर्गरीयसां श्रेष्ठः पुत्रः स्पर्शवतां वरः ॥८८॥
स्पृशतु त्वां समाश्लिष्य पुत्रो मे प्रियदर्शनः ।
पश्चादहं गमिष्यामि पितुरेवाश्रमं प्रति ॥८९॥
आहर्ता वाजिमेधस्य शतसंख्यस्य पौरवः ।
भविता तनयस्तेऽयमित्याह मां गुरुर्मुनिः ॥९०॥
मृगावकृष्टेन हि ते मृगयां परिधावता ।
अहमासादिता राजन् कुमारी पितुराश्रमे ॥९१॥
उर्वशी पूर्वचित्तिश्च सहजन्या च मेनका ।
विश्वाची च घृताची च षडेवाप्सरसां वराः ॥९२॥
तासां मां मेनका नाम ब्रह्मयोनिर्वराप्सराः ।
दिवः संप्राप्य जगतीं विश्वामित्रादजीजनत् ॥९३॥
सा मां हिमवतः प्रस्थे सुषुवे मेनकाप्सराः ।
अवकीर्य च मां याता परात्मजमिवासती ॥९४॥
किं नु कर्माशुभं पूर्वं कृतवत्यस्मि जन्मनि ।
यदहं बान्धवैस्त्यक्ता बाल्ये सम्प्रति च त्वया ॥९५॥

दुष्यन्त उवाच

न गर्भमभिजानामि त्वयि मत्तेजसार्जितम् ।
असत्यवचना नार्यः कस्ते श्रद्धास्यते वचः ॥९६॥
मेनका निरनुक्रोशा बन्धकी जननी तव ।
ययासि हिमवत्प्रस्थे निर्माल्यमिव चोज्झिता ॥९७॥

---

८८d : सुतः (for पुत्रः) C
९१b : अनुधावता A
९३b : या A
९४c : मा H
९५a : कर्माहुतम् G
९७c : हिमवत्पृष्ठे C
९७d : त्वं निर्माल्यमिवोज्झिता A

स चापि निरनुक्रोशः क्षत्रयोनिः पिता तव ।
विश्वामित्रो ब्राह्मणत्वलुब्धः कामवशं गतः ॥९८॥
मेनकाप्सरसां श्रेष्ठा महर्षीणां पिता च ते ।
तयोरपत्यं कस्मात्त्वं पुंश्चलीव प्रभाषसे ॥९९॥
अश्रद्धेयमिदं वाक्यं कथयन्ती न लज्जसे ।
विशेषतो मत्सकाशे दुष्टतापसि गम्यताम् ॥१००॥
क्व महर्षिः स चैवोग्रः क्वाप्सराः सा च मेनका ।
क्व च त्वमेव कृपणा तापसीवेशधारिणी ॥१०१॥
सुनिकृष्टा च ते योनिः पुंश्चलीव प्रभाषसे ।
यदृच्छया कामरागात् कयाचिज्जनिता ह्यसि ॥१०२॥
सर्वमेतत् परोक्षं मे यत् त्वं वदसि तापसि ।
नाहं त्वामभिजानामि यथेष्टं गम्यतां त्वया ॥१०३॥

इति श्रीपद्मपुराणे स्वर्गखण्डे शाकुन्तले तृतीयोऽध्यायः ॥३॥

---

९८d : कामवशानुगः A
१०१a : क्व चैवोग्रः A
पुष्पिका : शकुन्तलोपाख्याने CeGH
इत्यादि महापुराणे पाद्मे A

## ४

शकुन्तलोवाच

राजन् सर्षपमात्राणि परच्छिद्राणि पश्यसि ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यसि ॥१॥
मेनका त्रिदशेष्वेव त्रिदशाश्चानु मेनकाम् ।
ममैवोद्रिच्यते जन्म राजेन्द्र तव जन्मतः ॥२॥
क्षितावटसि राजेन्द्र अन्तरिक्षे चराम्यहम् ।
आवयोरन्तरं पश्य मेरुसर्षपयोरिव ॥३॥
महेन्द्रस्य कुबेरस्य यमस्य वरुणस्य च ।
भवनान्यनुसंयामि प्रभावं पश्य मे नृप ॥४॥
सत्यश्च जनवादोऽयं तं प्रवक्ष्यामि ते नृप ।
निदर्शनं ब्रवीमीति न कोपं कर्तुमर्हसि ॥५॥
विरूपो यावदादर्शे स्वमुखं नैव पश्यति ।
मन्यते तावदात्मानं अन्येभ्यो रूपवत्तमम् ॥६॥
यदा तु मुखमादर्शे विकृतं पश्यतेऽऽत्मनः ।
तदेतरं विजानाति स्वमेव नेतरं नरः ॥७॥
यस्तु स्याद् रूपसम्पन्नो न स निन्दति कंचन ।
अतीव जल्पन् दुर्वाचो भवतीह विकत्थनः ॥८॥
मूर्खो हि जल्पतां नृणां श्रुत्वा वाचं शुभाशुभम् ।
अशुभं वाक्यमादत्ते पुरीषमिव शूकरः ॥९॥

---

३a : हि राजन् A
५c : ब्रवीमि त्वं A
६b : स्वं रूपं AF
७b : पश्यते जन: C
८d : विचक्षण: H

प्राज्ञस्तु जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः ।
गुणवद् वाक्यमादत्ते हंसः क्षीरमिवाम्भसः ॥१०॥
अन्यान् परिवदन् साधुर्यथा हि परितप्यते ।
तथा परिवदन्नन्यान् हृष्टो भवति दुर्जनः ॥११॥
अभिवाद्य यथा वृद्धान् सन्तो गच्छन्ति निर्वृतिम् ।
एवं सज्जनमाक्रुश्य मूर्खो भवति निर्वृतः ॥१२॥
सुखं जीवन्त्यदोषज्ञा मूर्खा दोषानुदर्शिनः ।
यत्र वाच्याः परैः सन्तः परानाहुस्तथाविधान् ॥१३॥
अतो हास्यतरं लोके किञ्चिदन्यन्न विद्यते ।
यत्र दुर्जन इत्याह दुर्जनः सज्जनं स्वयम् ॥१४॥
सत्यधर्मच्युतात् पुंसः क्रुद्धादाशीविषादिव ।
अनास्तिकोऽप्युद्विजते जनः किं पुनरास्तिकः ॥१५॥
स्वयमुत्पाद्य वै गर्भं न ममेति वदत्यहो ।
तस्य देवाः श्रियं घ्नन्ति न च लोकानुपाश्नुते ॥१६॥
पुत्रस्ते भविता राजन् अपुत्रस्य महागुणः ।
चक्रवर्ती राजराज उत्तमः सर्वधन्विनाम् ॥१७॥
स त्वं नृपतिशार्दूल न पुत्रं त्यक्तुमर्हसि ।
आत्मानं सत्यधर्मौ च पालयन् पृथिवीपते ॥१८॥
वरं कूपशताद् वापी वरं वापीशतात् क्रतुः ।
वरं क्रतुशतात् पुत्रः सत्यं पुत्रशताद् वरम् ॥१९॥

---

१०d : इवाम्भसि A
१२b : शान्ता G
१३b : मूर्खो D
१३d : तथाविधि D
१४b : अन्यम् A
१५c : अनास्तिके B
१७a : पुत्रो मे GH
१८b : वक्तुमर्हसि G
१८c : च not found in G

अश्वमेधसहस्रं तु सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते ॥२०॥
राजन् सत्यं परं ब्रह्म सत्यं च समयः परम् ।
मा त्याक्षीः समयं राजन् सत्यं संगतमस्तु ते ॥२१॥
अनृते चेत् प्रसंगस्ते श्रद्दधासि न चेत् स्वयम् ।
कण्वस्यैवाश्रमं गच्छे तादृशे नास्ति संगतम् ॥२२॥
ऋतेऽपि त्वां महाराज शैलराजावतंसकाम् ।
चतुर्वर्णामिमामुर्वीं पुत्रो मे पालयिष्यति ।
मुनेः कण्वस्य वै वाक्यं भविता कथमन्यथा ॥२३॥

राजोवाच

किं नालपन्ति पुंश्चल्य एवमेव सुदुर्वचः ।
याहि त्वं गच्छ वाचाटे दूषयिष्यन्ति मां जनाः ॥२४॥

पुरोहित उवाच

अत्र वक्ष्यामि ते मन्त्रं शृणु राजन् महामते ।
यावत्प्रसवमत्रैव नारी तिष्ठतु ते गृहे ॥२५॥
यदि ते सदृशं पुत्रं कामिन्येषा प्रसोष्यति ।
ततस्तवैव भार्येति वेत्स्यामस्तदनन्तरम् ॥
शालिबीजाद् विजायेत न कदाचिद् यवाङ्कुरः ॥२६॥

राजोवाच

नैषा शुद्धान्तमध्ये तु मम वासमिहार्हति ।
संसर्गादपि पुंश्चल्यो दूषयन्ती कुलस्त्रियः ॥२७॥

---

२०a : ° सहस्रं च eFGH
२०c : ° सहस्रात् तु F
२१b : सत्याच्च AF
२५c : अमुत्रैव C
२५d : वसतु A
२७a : ° मध्येऽपि B ° मध्येति F
२७c : पुंश्चल्या G

पुरोहित उवाच

अदृष्टतनयास्योऽसि राजराजोऽपि भूतले ।
अतस्त्वत्सन्ततौ श्रद्धा राजन् मे जायतेऽधिका ॥२८॥
इयं साध्वी वरारोहा कण्वेन परिपालिता ।
व्यभिचारमतो राजन् नाहं मन्ये मनागपि ॥२९॥
यावत्प्रसवमेतां तु वासयेऽहं निजालये ।
प्रसवे सति कल्याणीं स्वयमेव ग्रहीष्यसि ॥३०॥
इत्युक्त्वा गौतमो ब्रह्मन् सान्त्वयित्वा शकुन्तलाम् ।
स्वगृहायैव तां नेतुं विमनाह्युपचक्रमे ॥३१॥
सा चापि मुक्तकण्ठं वै रुदति मृगलोचना ।
शनैः शनैः गौतमं तमनुगन्तुं प्रचक्रमे ॥३२॥
एतस्मिन्नन्तरे विप्र मेनकाप्सरसां वरा ।
तेजोरूपा व्योममध्यात् तडित्पातं पपात सा ॥३३॥
किमिदं किमिदं चित्रं इति जल्पत्सु सर्वतः ।
सभास्थानेषु च सर्वेषु तेजसा धर्षितेषु च ॥३४॥
आलोकनेऽप्यशक्तेषु दुष्यन्ते भयविह्वले ।
शकुन्तलां समादाय अंकमारोप्य सत्वरा ।
अम्बरं विजगाहे सा तत्केनापि न लक्षितम् ॥३५॥
एवं गते तु दुष्यन्तः खेदमाप ततो भृशम् ।
देवेन रचितां मायामबुध्यत तदा नृपः ॥३६॥

इति श्रीपद्मपुराणे स्वर्गखण्डे शाकुन्तले चतुर्थोऽध्यायः ॥४॥

---

२८a : ° तनयश्चासि A
° नयनास्योऽसि C

३२a : मुक्तकण्ठा A

पुष्पिका : शकुन्तलोपाख्याने CeFGH
इत्यादि महापुराणे पाद्मे A

# ५

शेष उवाच

एकदा स महीपालो मन्त्रिभिर्ब्राह्मणैः सह ।
प्रजानां वेदितुं वृत्तं बभ्राम नगरे द्विज ॥१॥
तत्र राजभटः कश्चिद् दृढमाबध्य धीवरम् ।
दण्डेन ताडयन्नुग्रैर्वचोभिः समतर्जयत् ॥२॥
राजाभरणमेतद्धि यत्त्वया चोरितं छलात् ।
अतो बध्यत्वमापन्नं त्वां नयामि नृपान्तिके ॥३॥
इत्युक्त्वा तं करे गृह्य ताडयन् बहु मूर्धनि ।
राजान्तिकमुपानीय राजानमिदमब्रवीत् ॥४॥
एष धीवरको राजंश्चोरयित्वाङ्गुरीयकम् ।
त्वन्नामचिह्नितं लोके विदितं रत्ननिर्मितम् ।
विक्रेतुमुद्यतः पापो मया दृष्टो महीपते ॥५॥
राजा तं प्राह दासेदं कुतो लब्धमिह त्वया ।
कथयाभयमेतत्ते दत्तं जानीहि साम्प्रतम् ॥६॥

धीवर उवाच

जात्याऽहं धीवरो राजन् मत्स्यमात्रोपजीवकः ।
चोरिकां नैव जानामि न वसूनां न धूर्तताम् ।
जालेन मत्स्यान् बध्नामि सरस्वत्या हि रोधसि ॥७॥

---

२d : समताडयत् C
३c : अधो H
३d : नृपान्तिकं A
५a : राजन् A
५f : मयाकृष्टो A
७b : °जीविनः C
७d : न च शूनां AGH

एकदा जालमातत्य सरस्वत्यामहं नृप ।
स्थितः प्रत्याशया तत्र तीरस्थं तरुमास्थितः ॥८॥
रोहितः कोऽपि सुमहाञ्जाले बद्धो बभूव ह ।
ततोऽहं जालमुत्तार्य दृष्ट्वा रोहितमुद्धतम् ॥९॥
खड्गेन कृतवान् सद्यः परमानन्दनिर्वृतः ।
ततस्तदुदरे लब्धमेतद् भूपाङ्गुरीयकम् ॥१०॥
कस्येति न विजानामि तदहं नगरे तव ।
विक्रेतुमागतो बद्धो भटेनानेन भूमिप ॥११॥

राजोवाच

देहि पश्यामि कस्यैतत् किंरूपमङ्गुरीयकम् ।
त्वमेतन्मूल्यमागृह्य सुखेनैव व्रजालयम् ॥१२॥
इत्युक्त्वा पाणिनादाय यावद् राजा स पश्यति ।
निपतन्ति स्म नेत्राभ्यां तावदेवाश्रुबिन्दवः ॥१३॥
प्रेयसीं तामनुस्मृत्य तथा गान्धर्वकर्म च ।
गर्भाधानं च सर्वं तन्मूर्च्छितो निपपात ह ॥१४॥
तदा पुरोहितोऽमात्या भृशमुद्विग्नचेतसः ।
उत्थाप्य तं महीपालं निवेश्य च वरासने ॥
लब्धसंज्ञं क्षणैर्ब्रह्मन् पप्रच्छुः किमिदं तव ॥१५॥
दुष्यन्तोऽपि समाश्वस्य प्रेयसीं तामनुस्मरन् ।
निःश्वस्य दीर्घमुष्णं च अश्रुमिश्रमभाषत ॥१६॥

---

८a : जलं G
८d : आश्रितः C
९ab : सुमहान् जाले ACeG
९d : उत्तमं AF
१०a : कृत्तवान् GH
११b : ततोऽहं C
१५e : लब्धं A

चिन्तामणिरिवायाता काममर्पयितुं स्वयम् ।
मया निराकृता बाला अन्तःसत्त्वा सुलोचना ॥२७॥
कल्पवल्लीव कामानां सम्प्रदानेऽभ्युपस्थिता ।
उन्मूलिता मया तन्वी प्रसोष्यन्ती नरोत्तमम् ॥२८॥
संरम्भारुणनेत्रायाः स्मरचापायितभ्रुवः ।
वचांसि गूढगर्वाणि विधुन्वन्ति स्मृतानि माम् ॥२९॥
एवं विलपमानं तं राजानं गौतमोऽब्रवीत् ।
तद्गतं नानुशोचस्व समाश्वस परन्तप ॥३०॥
कथितं च मया तत्र दृष्ट्वा तस्याः सुलक्षणम् ।
सद्रूपशालिनी बाला राज्ञी भवितुमर्हति ॥३१॥
सा हि मेनकया जाता चारुरूपा मनस्विनी ।
देवीव नावमानार्हा त्वया राजन् विवाहिता ॥३२॥
यद् भूतं महदाश्चर्यं प्रत्याख्यातवति त्वयि ।
तद् दृष्ट्वा के न शोचन्ति वदन्तस्त्वां हतश्रियम् ॥३३॥
भद्रं वाप्यथवाऽभद्रं प्रियमप्रियमेव वा ।
यद् गतं तद् गतं राजन् नानुशोचन्ति पण्डिताः ॥३४॥

शेष उवाच

विमृशत्स्वेव तेष्वेवं देशान्तरचरश्चरः ।
राज्ञे निवेदयामास यद् दृष्टं सागराम्भसि ॥३५॥

चर उवाच

राजन् सांयात्रिको नाम्ना धनवृद्धिर्महाधनः ।
विपन्नः सागरे सप्त वाहयन् सम्भृतास्तरीः ॥३६॥

---

२७a : चिन्तामणिवरायाता D
२८b : संप्रदानेषूपस्थिता A
३१c : तद्रूप° AH
३६b : महाबलः H
३६d : गच्छतास्तरीः H

स चानपत्यस्तस्येष्टा नावो रत्नैः प्रपूरिताः ।
तवैव कोषमर्हन्ति गृह्यन्तामचिरेण ताः ॥३७॥

राजोवाच

यान्तु मे मन्त्रिणः सम्यग् जानन्तु तत्परिग्रहान् ।
यदि काचिद् भवेद् भार्या गर्भिणी वणिजः क्वचित् ॥
सैव तद्धनमादद्यान्नाधिकारी तदा नृपः ॥३८॥
तच्छ्रुत्वा मन्त्रिणो गत्वा विज्ञाय च विशेषतः ।
राज्ञे निवेदयामासुर्वृत्तान्तं ब्राह्मणर्षभ ॥३९॥
अत्रैव नगरे राजन् भार्या तस्य विलासिनी ।
अन्तःसत्त्वा वणिक्पुत्री वर्तते च पतिव्रता ॥४०॥
राजा प्राह तरिस्थानि यानि यानि धनानि च ।
तानि तस्यै ददत्वद्य भटा मे यान्तु सत्वराः ॥४१॥
इति प्रस्थाप्य राजेन्द्रो भटांस्तद् धनरक्षणे ।
द्विगुणेनैव शोकेन दह्यते स्म ततोऽब्रवीत् ॥४२॥
ममाप्यन्ते एवमेव मम राजस्य दुर्गतिः ।
कं यास्यति महीयं हि धार्मिकं वाप्यधार्मिकम् ॥४३॥
अन्तःसत्त्वा महाभागा या मे भार्याप्युपस्थिता ।
उपेक्षिता प्रमादेन मन्दभाग्येन सा मया ॥४४॥
अत ऊर्ध्वं मया दत्तं पानीयं विधिनापि च ।
पास्यन्ति पितरः कोष्णनिःश्वासेन मलीमसम् ॥
पिण्डविच्छेददुःखार्ताः पिण्डानि च तथैव हि ॥४५॥
क्व लभ्यते सा ललना साक्षाच्छ्रीरिव रूपिणी ।
न मन्दभाग्यं पापिष्ठं ज्ञात्वा मां पुनरेष्यति ॥४६॥

---

३८a : सम्यक् ACe
३८e : आदद्यात् BC
३९a : तत् श्रुत्वा Ceh
४४b : या सा CGH
४६b : साक्षात् श्रीरिवरूपिणी CeH

नैवं विधस्य दुष्टस्य दारुणस्य दुरात्मनः ।
तथाविधा वरारोहा भार्या भवितुमर्हति ॥४७॥
एवं विलपमानस्य दुष्यन्तस्य महीपतेः ।
व्यतीयुस्त्रीणि वर्षाणि शोचतोऽहर्निशं द्विज ॥४८॥
अथासौ देवराजेन समाहूतो ययौ दिवम् ।
त्रिदिवेशैरवध्यानां निधनाय सुरद्विषाम् ॥४९॥
निर्वाह्य देवताकर्म रथं मातलिसारथिम् ।
आरुह्य भुवमायास्यन् मारीचाश्रममागमत् ॥५०॥
तत्र काचिज्जरा नारी ब्राह्मणी बालमद्भुतम् ।
लालयन्ती नृपं वीक्ष्य ददावासनमन्तिके ॥५१॥
बालस्तु तावद् वेगेन प्रविश्य गहनं वनम् ।
निबध्य पंचपञ्चास्यान् लताभिः समुपानयत् ॥५२॥
उवाच वृद्धामेतेषां कति दन्ताः समुन्नताः ।
निम्ना वा कति मध्या वा गणयित्वा वदाशु मे ॥५३॥
दुष्यन्तस्तु तदालोक्य बालस्याद्भुतविक्रमम् ।
चिन्तयामास मेधावी भार्याविरहकातरः ॥५४॥
पौरवादप्यहो बालो धत्तेऽधिकपराक्रमम् ।
सर्वराजश्रिया युक्तो न विप्रस्तदयं भवेत् ॥५५॥
चेतो मे वहते स्नेहं दृष्ट्वा बालं दुरासदम् ।
कारणं तत्र पश्यामि यन्ममेयमपुत्रता ॥५६॥
इति चिन्तापरे राज्ञि सिंहः कोऽपि स्वबन्धनम् ।
छित्वा नखेन दुर्वार्यो गन्तुं प्राक्रमत द्विज ॥५७॥
दूरादुत्प्लुत्य तं बालो निगृह्य पुनरेव तम् ।
उवाच किं रे पञ्चास्य प्राप्तोऽसि ब्रह्मबालकम् ॥५८॥

---

५३c : कति वा मध्या C
५४a : तदालक्ष्य CDGH
५६a : हरते G
५७c : दुर्वारो AF

पौरवोऽस्मि न जानासि क्षत्रियो रणकोविदः ।
तदुपश्रुत्य राजर्षेः किञ्चिदुच्छ्वसितं मनः ॥५९॥
बालभाषितमित्येव सम्यक् श्रद्धापि न भवेत् ।
अथागमत् कश्यपोऽपि वनात् कुशसमिद्धरः ॥६०॥
विलोक्य तत्र राजानं दुष्यन्तं मुमुदे भृशम् ।
आशीर्भिस्तमथाभ्यर्च्य विधायातिथिसत्क्रियाम् ॥६१॥
पप्रच्छ कुशलं राज्ये देवानां च तपोधनः ।
राजा तत्सर्वमाचष्ट मुनिवाचा गतश्रमः ॥६२॥
अथोवाच विहस्येषत् कोऽयं बालस्तपोधन ।
महाबलो महाबाहुः पौरवोऽहमिति ब्रुवन् ॥६३॥

कश्यप उवाच

तवैव तनयो राजन् यमसूत शकुन्तला ।
दमनः सर्वसत्त्वानां सिंहादीनां महाबलः ॥६४॥
तत्सर्वदमनो नाम मयैवास्य निरूपितम् ।
भरस्वेति च वच्मि त्वां ततोऽसौ भरतो भवेत् ॥६५।
दुर्वाससो हि शापेन त्वया या विस्मृता पुरा ।
त्यक्ता मेनकयानीय मयि न्यस्ता मनस्विनी ॥६६॥
सा ते शकुन्तला राज्ञी सुषावेमं कुमारकम् ।
महाबलो महाप्राणो दुर्धर्षः सर्वभूभुजाम् ॥६७॥
बद्धैः क्रीडति पञ्चास्यैः प्रविभेत्यपि नान्तकात् ।
मया विमृष्टं दुर्दान्तः शिशुरेष ममाश्रमे ॥६८॥
वस्तुं नार्हति बाल्याद्धि कदा किं नु समाचरेत् ।
अत एनं महीभर्तुः सुतं तं प्रापयाम्यहम् ॥६९॥

---

५९b : रणदुर्मदः A
६०b : नो AF नाभवत् G
६२a : राज्ञे A
६५a : सर्वमदनो CD
६९c : तत G
एवं A

त्वमथो देवकार्यार्थं गतः स्वर्गं ततो मया ।
कृतो विलम्बो राजर्षे शापान्तेऽपि तव प्रभो ॥७०॥
एष ते गृह्यतां पुत्रश्चक्रवर्ती भविष्यति ।
आहर्ता सर्वयज्ञानां महाभागवतो नृप ॥७१॥
इत्युक्त्वा ब्राह्मणीं प्राह वृद्धां देवगुरुर्मुनिः ।
शकुन्तलामिहानीय समर्पय महीपतौ ॥७२॥
इत्युक्त्वा ब्राह्मणी गत्वा समाहूय शकुन्तलाम् ।
राज्ञे समर्पयामास राजा च मुमुदे भृशम् ॥७३॥
अथानुज्ञाप्य मारीचं सभार्यः ससुतो नृपः ।
हृष्टः स्वपुरमागच्छत् देवयानेन मारिष ॥७४॥
स एव भरतो नाम दुष्यन्ततनयो महान् ।
ववृधे तत्र विप्रेन्द्र शुक्लपक्षे यथा शशी ।

इति श्रीपद्मपुराणे स्वर्गखण्डे शाकुन्तले पञ्चमोऽध्यायः ॥५॥

---

७०d : शापान्ते च G

७२-७३ : ब्राह्मणीं·········उक्त्वा not found in F

पुष्पिका : इत्यादिमहापुराणे पाद्मे A शकुन्तलोपाख्यानं F शकुन्तलोपाख्यानं समाप्तं पञ्चमोऽध्यायः : CeGH

# ६

शेष उवाच

हृष्टः प्रमुदितो राजा पुरमागत्य सत्वरः ।
चकार तस्य पुत्रस्य पितृकार्याणि सर्वशः ।
मूर्ध्नि चैनमुपाघ्राय सर्वदा परिषस्वज ॥१॥
स भाज्यमानो विप्रैश्च स्तूयमानश्च वन्दिभिः ।
स मुदं परमां लेभे पुत्रसंस्पर्शजां नृप ॥२॥
तां चैव भार्यां दुष्यन्तः पूजयामास धर्मतः ।
अब्रवीच्चैव तां राजा सान्त्वपूर्वमिदं वचः ॥३॥
यच्च त्वां शापसम्मुग्धो बभाषे विप्रियं बहु ।
क्षन्तव्यं तन्महाभागे त्वं हि साध्वी पतिव्रता ॥४॥
यच्च कोपितयात्यर्थं त्वयोक्तोऽस्म्यप्रियं प्रिये ।
प्रणयिन्या विशालाक्षि तत् क्षान्तं ते मया शुभे ॥५॥
सर्वं शापकृतं देवि विदितं मे तवाधुना ।
अभिज्ञानं च यन्नष्टं मन्ये तद्दैवकारितम् ॥६॥
तामेवमुक्त्वा राजर्षिर्दुष्यन्तो महिषीं प्रियाम् ।
वासोभिरन्नपानैश्च पूजयामास मारिष ॥७॥
दुष्यन्तस्तु ततो राजा पुत्रं शाकुन्तलं तदा ।
समूढयौवनं दृष्ट्वा यौवराज्येऽभ्यषेचयत् ॥८॥

---

१c : कृतानि (for चकार) G
२d : नृप: G
४a : पापसंमुग्धो DG
६a : पापकृतं H
६b : ते A

तस्य तत् प्रथितं चक्रं प्रावर्तत महात्मनः ।
भास्वरं दिव्यमजितं लोकसंवादनं महत् ॥९॥
स विजित्य महीपालांश्चकार वशवर्तिनः ।
चचार च सतां धर्मं प्रपेदेऽनुत्तमं यशः ॥१०॥
पितरि प्रस्थितेऽरण्यं स सर्वदमनो नृपः ।
महात्मा चक्रवर्त्यासीत् सार्वभौमः प्रतापवान् ॥११॥
ईजे च बहुभिर्यज्ञैर्यथा शक्रो मरुत्पतिः ।
भरताद् भारती कीर्तिर्येनासीद् भारतं कुलम् ॥१२॥
क्रतूंश्चकार सर्वेषां देवानां भरतो नृपः ।
सर्वे देवाः प्रसन्नाश्च स्वं स्वं लोकं वरं ददुः ॥१३॥
एवं कृत्वा स वै यागान् पुत्रे राज्यं समर्प्य च ।
विहाय विषयान् राजा तपस्तेपे महायशाः ॥१४॥
हरिमाराधयन् भक्त्या तल्लोकाय मनो दधत् ।
तस्मै तुतोष भगवान् स्वयं गरुडवाहनः ॥१५॥
सुनन्दं नाम भृत्यं वै प्रेषयामास केशवः ।
वैकुण्ठं पदमानेतुं भरतं पौरवर्षभम् ॥१६॥
विमानेन वरार्हेण सुनन्दोऽथ समाययौ ।
मातलिश्चापि शक्रस्य रथेनायात्तदा मुने ।
नेतुमिन्द्रपुरं ब्रह्मन् दूताः सूर्यस्य वै तदा ॥१७॥
चन्द्रस्य च कुबेरस्य शिवस्य वरुणस्य च ।
यमस्य च तथान्येषां देवानामपि मानद ॥१८॥

---

९c : भास्वन्तं H
१०ab : महीपालान् चकार DFGH
१४a : यज्ञान् G
१७a : वराहेण A
१७d : तथा CeFG
१७e : इन्द्रपुरीं CeH
१७f : दूत. H
१७f : तथा H

नाप्राप्यस्तस्य लोकोऽभूद् भरतस्य महात्मनः ।
तत्तत्कर्मफलं तस्य राज्ञः सर्वमुपस्थितम् ॥१९॥
दृष्ट्वा समागतान् दूतान् भरतः स महीपतिः ।
हृष्टः सुनन्दं प्रोवाच प्रणम्य मधुरं वचः ॥२०॥
को लोको मम गन्तव्यः पथा केन कथं च वा ।
कथमेते समायाता बहवः सविमानकाः ॥२१॥
मया भूरीणि कर्माणि कृतानि हरिसेवक ।
तांल्लोकान्नाहमिच्छामि ये कालेऽपि विनाशिनः ॥२२॥

शेष उवाच

देवदूताः समासाद्य भरतं वाक्यमब्रुवन् ।
विविधान्येव कर्माणि पुण्यानि कृतवानसि ॥
तथैव सर्वांल्लोकांस्त्वं गन्तुमर्हसि भूमिप ॥२३॥
तथाऽयं वैष्णवो दूतस्त्वां तु नेतुमिहागतः ।
प्रायेण विष्णुभक्ता हि लोकान्निच्छन्ति नापरान् ॥२४॥
तथाऽपि विबुधाः सर्वे कर्मणां प्रतियापनम् ।
चिकीर्षवो विमानानि प्रेषयामासुरञ्जसा ॥२५॥
यदीच्छसि क्रमेणैव भुक्त्वा भोगाननेकशः ।
मर्मार्जितेषु लोकेषु ततो वैकुण्ठमाप्स्यसि ॥२६॥

---

१६a : लोकोऽभूत् CD
२०a : लोकान् G
२०c : हृष्टं F
२२c : तान् लोकान् FH
२३a : समागत्य C
२३d : अपि C
२३e : सर्वान् F
२४a : तथाहं G
२४ab : दूतो नेतुं त्वामिह चागतः A
२५b : प्रतियातनं CeFH
२६a : यदिच्छसि CD

भरत उवाच

यात यूयं देवदूता दूताद् विष्णोर्जगत्प्रभोः ।
लोकानां संस्थितिं ज्ञात्वा विधास्यामि यथाहितम् ॥२७॥
इत्युक्त्वा देवदूतास्ते यथास्थानं ययुः पुनः ।
भरतो विष्णुदूतं तु कृताञ्जलिरभाषत ॥२८॥
एते समागता देवदूता मां नेतुमूर्ध्वतः ।
दिवोमण्डलमानं तु शृणुयां भवतो मुखात् ॥२९॥
भूमेरुपरि ये लोका ये च तत्र वसन्ति च ।
येन पुण्येन देवेन्द्र सर्वं व्याख्यातुमर्हसि ॥३०॥
कः पन्थाः कस्य लोकस्य किं प्रमाणं च किं सुखम् ।
तत्क्रमेणैव मे सर्वं देवप्रवर कथ्यताम् ॥३१॥

सुनन्द उवाच

शृणु राजन् प्रवक्ष्यामि विष्णोरद्भुतकर्मणः ।
विराड्रूपस्य संस्थानमाख्यानं महदुत्तमम् ॥३२॥
यावती भूः समुद्दिष्टा ससमुद्राद्रिकानना ।
प्रतिभाता महाराज किरणैश्चन्द्रसूर्ययोः ॥३३॥
वियच्च तावदुपरि विस्तारपरिमण्डलम् ।
पञ्चविंशतिकोट्यस्तु योजनानां हि तत्स्मृतम् ॥३४॥
नवतीनां सहस्राणि योजनानि महीपते ।
भूमेरूर्ध्वं च ये लोकाः सिद्धचारणरक्षसाम् ॥३५॥

---

२७b : दूता F
२८a : उक्ता H
२९ab : G drops देवदूता
३०d : अर्हति C
३२d : महदद्भुतम् ACF
३४d : योजनानां च eFH योजनानां तु CG
३५b : योजनानां AG

ये च विद्याधरा यक्षरक्षोगन्धर्वकिन्नराः ।
भूतप्रेताः पिशाचाश्च तेषां ते स्थानमीरितम् ।।३६।।
ततो राहुर्महाबाहो त्रयोदशसहस्रकम् ।
योजनानां प्रविस्तारं मण्डलं तस्य कथ्यते ।।३७।।
स्मरन् वैरं पुरा प्राप्तं यः पर्वणि महाग्रहः ।
ग्रासाय धावति क्रोधात् पुष्पवन्तौ महीपते ।।३८।।
तदैव भगवच्चक्रं सहस्रार्कोदयद्युति ।
उपतिष्ठति तद् भीत्या पुनरेव निवर्तते ।।३९।।
उपरागं वदन्त्येवं पुण्यकालश्च कथ्यते ।
लक्षयोजनतो भूमेरेष भानुर्व्यवस्थितः ।।४०।।
भानोः साक्षादुपरि लक्ष्येन लक्ष्यः क्षपाकरः ।
नक्षत्रमण्डलं चन्द्राल्लक्षयोजनमुच्छ्रितम् ।।४१।।
नक्षत्रमण्डलात्सौम्य उपरिष्टाद् द्विलक्षतः
बुधात्शुक्रो द्विलक्ष्ये तु शुक्राद् भौमो द्विलक्षके ।।४२।।
मंगलादुपरिष्टाच्च गीष्पतिर्लक्षकद्वये ।
द्विलक्षयोजनोत्सेधः सौरिर्देवपुरोहितात् ।।४३।।
दशायुतसमुच्छ्रायं सौरेः सप्तर्षिमण्डलम् ।
सप्तर्षिभ्यः सहस्राणां शतादूर्ध्वं ध्रुवस्थितिः ।।४४।।
पादगम्यं हि यत् किञ्चिद् वस्त्वस्ति धरणीतले ।
तद् भूर्लोक इति ख्यातं शाकद्वीपादिकाननम् ।।४५।।

---

३६c : भूतप्रेत° H
४१b : लक्षे CDGH
४२b : उपरिष्टात् D
४३b : गीःपति G
४४a : शतायूत° C
४५a : पादगम्यंस्तु A
यत्किञ्चित् eH
४५b : पृथिवीमयम् A
४५c : स A
ख्यातः A

भूर्लोकाच्च भुवर्लोकः सूर्यावधिरुदीरितः ।
आदित्यादाध्रुवं राजन् स्वर्लोकः कथ्यते बुधैः ॥४६॥
महर्लोकक्षितेरूर्ध्वमेककोटिप्रमाणतः ।
कोटिद्वये वर्तमानो जनो भूर्लोकतो नृप ॥४७॥
चतुःकोटिप्रमाणस्तु तपोलोकोऽपि भूपते ।
उपरिष्टात्क्षितेरष्टौ कोटयो सत्यमीरितम् ॥४८॥
सत्यादुपरि वैकुण्ठो योजनानां प्रमाणतः ।
भूर्लोकात्परिसंख्यातः कोटिरष्टादशप्रभो ॥४९॥
यत्रास्ते श्रीपतिः साक्षात् सर्वेषामभयप्रदः ।
वैकुण्ठादुत्तरो शैवो लोकः षोडशकोटयः ॥५०॥
तिर्यगेव महाराज कैलाशाख्यस्तु पर्वतः ।
पार्वत्या सहितः शम्भुः यत्रास्ते स्वगणैर्वृतः ॥५१॥

इति श्रीपद्मपुराणे स्वर्गखण्डे भुवनादिवर्णनं षष्ठोऽध्यायः ॥६॥

---

४८a : चतुःकोटिः° H
४८ab : not found in C
४८b : तपोलोकोऽस्तु F भूतलात् (for भूपते) A
५०cd : शैवलोकः FG
पुष्पिका: इत्यादिमहापुराणे पाद्मे A
भूरादिलोकवर्णनं CeH

# ७

सुनन्द उवाच

संक्षेपेण मया प्रोक्तं मानमूर्ध्वस्य मानद ।
क्रमेण वच्मि ये लोका यस्मिंल्लोके वसन्त्युत ॥१॥
देवदूतैश्च यत् प्रोक्तं क्रमेण लोकदर्शनम् ।
येन पुण्येन तत्सर्वं कथयामि महीपते ॥२॥
तत्र योजनपर्यन्तं पक्षिणां गतिरुच्यते ।
भूतादीनां ततो लोकान् निबोध नृपसत्तम ॥३॥
अल्पपुण्याल्पलक्ष्मीकाः पिशाचाः प्रचरन्ति च ।
दत्त्वानुतापं कुर्वन्ति न न कृत्वा ददत्यपि ॥४॥
नत्वापि देवान् प्रासंग्यात् तद्विनिन्दापराश्च ये ।
शिवं प्रसंगतोऽभ्यर्च्य हरौ भक्तिविवर्जिताः ॥५॥
ते च सर्वे पिशाचत्वं प्राप्य व्योम्नि भ्रमन्ति हि ।
ततो मेघाः प्रदृश्यन्ते व्याप्यैतद् दशयोजनम् ॥६॥
ततो भूताः पिशाचाश्च ये चान्ये रुद्रपार्षदाः ।
कृताल्पपुण्या देवे च महेशे कृतभक्तयः ॥७॥
ततो गुह्यकलोकोऽस्ति गुह्यकानां स्थितिर्यतः ।
न्यायेनोपार्ज्य वित्तानि गूहयन्ती च ये भुवि ॥८॥
स्वधर्मस्था धनाढ्याश्च शूद्रप्रायाः कुटुम्बिनः ।
संविभज्य च भोक्तारः क्रोधासूयाविवर्जिताः ॥९॥

---

३a-४b : not found in C
४c : दत्त्वानुचापं G
५a : प्रासंगात् F
६a : तेऽपि C
७b : ° पार्शदाः A

न तिथिं नैव वारांश्च संक्रान्त्यादि न पर्व च ।
नाधर्मं च न धर्मं च विन्दन्त्येते सदासुखाः ॥१०॥
एकमेव हि जानन्ति कुलपूज्यो हि यो द्विजः ।
तस्मै दानं प्रयच्छन्ति मन्यन्ते तद्वचः परम् ॥११॥
समृद्धिभाजश्च तत्र स्युस्तेन पुण्येन गुह्यकाः ।
हृष्टपुष्टाः स्थूलवक्त्रा मेघरावाः पिचिण्डिलाः ॥१२॥
श्यामाङ्गा लोमशाश्चैव गुह्यकाः श्मश्रुलास्तथा ।
भुञ्जते स्वर्गसौख्यानि देववच्चाकुतोभयाः ॥१३॥
गन्धर्वाणां ततो लोकः परतः शतयोजनात् ।
देवानां गायकास्ते च चारणाः स्तुतिपाठकाः ॥१४॥
गीतिज्ञा अपि गीतेन तोषयन्ति नराधिपान् ।
स्तुवन्ति च धनाढ्यान् ये धनलोभेन मोहिताः ॥१५॥
राज्ञां प्रसादलब्धानि सुवासांसि धनानि च ।
सुगन्धीनि च वस्तूनि कर्पूरादीनि भूपते ॥१६॥
ब्राह्मणेभ्यः प्रयच्छन्ति गीतं गायन्त्यहर्निशम् ।
स्तुतिकर्मणि रक्ताश्च नाट्यशास्त्रविशारदाः ॥१७॥
पापानि च न कुर्वन्ति नरकोत्पादकानि वै ।
तेन पुण्येन गन्धर्वलोकस्तेषां विशिष्यते ॥१८॥
ब्राह्मणास्तोषिता यद्वै धनैर्गीतादिनार्जितैः ।
गीतवाद्यप्रभावेण देवर्षिर्नारदो महान् ॥१९॥
जगत्पूज्यो विष्णुलोके मान्यो भागवतैः सदा ।
शम्भोश्च वल्लभो राजन् सर्वत्रास्खलिता गतिः ॥२०॥

---

१०c : नाधर्मधनधर्म च H
१२d : मेघवाचा A
१३c : सर्व° A
१४c : गायनास्ते CeFGH
१७c : स्तुतिकर्मनिरक्ताश्च A
१८c : °प्रमादेन C

तुम्बुरुर्नारदश्चापि देवानामपि वल्लभौ ।
नादरूपी शिवः साक्षादतस्तत्त्वविदौ हि तौ ॥२१॥
यदि गीतं क्वचिद् गीतं श्रीमद्धरिहरात्मकम् ।
मोक्षं तत्र फलं प्राहुः सान्निध्यमथवा तयोः ॥२२॥
गीतज्ञो यदि गीतेन नाप्नोति परमं पदम् ।
रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥२३॥
निष्कामेन यदा पुंसा गीतं येनेह गीयते ।
हरेर्गुणानुकथनं मुक्तिस्तस्य न दुर्लभा ॥२४॥
विद्याधराणां लोकस्तु ततः सर्वसुखप्रदः ।
तत्र विद्याधरा राजन् नानाविद्याविशारदाः ॥२५॥
ये तु विद्यार्थिनामन्नमुपानद्वस्त्रकम्बलम् ।
औषधान्यपि यच्छन्ति तत्पीडाशमनानि हि ॥२६॥
नानाकलाः शिक्षयन्ति विद्यागर्वविवर्जिताः ।
शिष्यं पुत्रेण पश्यन्ति वस्त्रताम्बूलभोजनैः ।
अलंकृताश्च सत्कन्या धर्मेणोद्वाहयन्ति ये ॥२७॥
अभिलाषधिया नित्यं पूजयन्तीष्टदेवताः ।
एतैः पुण्यैर्वसन्तीह विद्याधरगणा इव ॥२८॥
ततश्चाप्सरसां लोकः स्वर्गिणां सुखदः सदा ।
तत्र वारविलासिन्यो यज्ञभाजां प्रियंकराः ॥२९॥

---

२२c : तत् तु eGH
२३a : गीतिज्ञो C
२४d : सुदुर्लभा A
२५b : पूर्वसुख° H
२६a : च (for तु) G
२६c : ओषधानि च AF
२७d : च (for ये) CDFGH
२८b : शुभः D

गीतज्ञा नृत्यकुशला वाद्यविद्याविचक्षणाः ।
कामकेलिरसाभिज्ञा द्यूतविद्यासु पारगाः ॥३०॥
रसज्ञाः भाववेदिन्यश्चतुराश्चाटुसूक्तिषु ।
नानादेशविशेषज्ञा नानाभाषासु कोविदाः ॥३१॥
लीलानर्मसु रसज्ञाः सुप्रतापेषु पण्डिताः ।
यूनां मनांसि सततं विहारैः रमयन्ति च ॥३२॥
निर्मथ्यमानात् क्षीरोदात् पूर्वमप्सरसस्तु ताः ।
निःसृतास्त्रिजगज्जेतुर्मोहोनास्त्रं मनोभुवः ॥३३॥
उर्वशी मेनका रम्भा चित्रलेखा तिलोत्तमा ।
वपुष्मती कान्तिमती लीलावत्युत्पलावती ॥३४॥
अलम्बुषा गुणवती कर्पूरतिलकोर्वरा ।
कलानिधिर्गुणनिधिः स्थूलकेशी कलावती ॥३५॥
चकोराक्षी चन्द्रकला तथा मदनमोहिनी ।
अनङ्गतिलका चापि तथा मुनिमनोहरा ॥३६॥
ग्रावद्रावा तपोद्वेष्ट्री कृतशुक्ला शुभानना ।
दारुसंजीवनी सुश्रीश्चारुनासा सुवर्णिका ॥३७॥
पञ्चाश्वमेधिका चैव दानशुक्ला हिमावती ।
तपःशुक्ला तीर्थशुक्ला राजसूयार्थिनी तथा ॥३८॥
अष्टाग्निहोमिका तद्वद् दृष्टिद्रावाश्मकम्पिनी ।
कार्यविस्मारयन्ती च वाजपेयशतोद्भवा ।
इत्याद्यप्सरसां श्रेष्ठं सहस्रं षष्टिसंमितम् ॥३९॥

---

३०c : कामकेलिकला° G
३०d : द्रुत° C
३२a : लीलानर्मसु सारज्ञा G
३७a : ग्रावद्रावी F
३७b : ° शुत्का B
३६b : ° श्राश्व°D

तस्मिन्नप्सरसां लोके वसन्त्यन्या अपि स्त्रियः ।
सदास्खलितलावण्याः सदास्खलितयौवनाः ॥४०॥
दिव्याम्बरा दिव्यमाल्या दिव्यगन्धानुलेपनाः ।
दिव्यभोगैः सुसम्पन्ना स्वेच्छाविधृतविग्रहाः ॥४१॥
कृत्वा मासोपवासानि ब्रह्मचर्यव्रते रताः ।
विष्णुभक्तिसमायुक्ताः स्खलन्ति ब्रह्मचर्यतः ॥४२॥
सकृदेव द्विकृत्वा वा त्रिकृत्वा दैवयोगतः ।
इह सुचिरकं भुक्त्वा विपाकात् तस्य कर्मणः ॥४३॥
ता नार्यो दिव्यभोगिन्यो रूपलावण्यसम्पदः ।
निवसन्त्यप्सरोलोके सर्वकामसमन्विताः ॥४४॥
कृत्वा व्रतानि साङ्गानि काम्यानि च विधानतः ।
भवन्ति स्वैरचारिण्यो देवभोग्या वराङ्गनाः ॥४५॥
पतिव्रतधृता नार्यो बलेन बलिना धृताः ।
भर्तृबुद्ध्या रमन्ते तं कदाचित् ताश्च भूमिप ॥४६॥
भर्तरि रोषिते याश्च ब्रह्मचर्यव्रताः सदा ।
विप्लवन्ते सकृद् दैवात् तत्र ता वामलोचनाः ॥४७॥
अवश्यं शीलभंगे हि भुक्त्वा निरययातनाः
विष्णुभक्तिप्रभावाच्च भवेयुर्वारयोषितः ॥४८
कुसुमानि सुगन्धीनि सुवासश्चन्दनं तथा ।
सुगौरं चापि कर्पूरं सुसूक्ष्माण्यम्बराणि च ॥४९॥

---

४०c : ° लावण्या D
४१ab : not found in D
४५ab : काम्यानि साङ्गानि विविधानि च AF
४६-४७ : not found in G
४६b : वर्णिता A
४७b : ° व्रते रताः A
४८a : शीलभंगेन AF

पर्णानि ऋजुताराणि जीर्णानि कठिनानि च ।
साग्राणि स्वर्णवर्णानि स्थूलनीलशिवानि च ॥५०॥
सुवासोपस्कराढ्यानि नागवल्ल्या महीपते ।
शय्या विचित्रास्तरणा रतिशालाचितानि च ॥५१॥
नानाकौतुकवस्तूनि समर्च्य द्विजदम्पती ।
काम्यमेतन्महादानं रविसंक्रमणे दिने ॥५२॥
किं वा प्रतिव्यतीपातं दद्यात्संवत्सरावधि ।
रतिकामा महाराज काममुद्दिश्य भामिनी ।
सा श्रेष्ठाऽप्सरसां मध्ये वसेदाकल्पमङ्गना ॥५३॥
कन्यारूपधरा काचिद् या भुक्त्वा केनचित् क्वचित् ।
देवरूपेण तं कालमारभ्य ब्रह्मचारिणी ॥५४॥
तदेव वृत्तं ध्यायन्ती निधनं प्राप्नुयाद् यदि ।
दिव्यरूपधरा साऽपि जायते दिव्यरूपभाक् ॥५५॥
तस्मिंल्लोके महाराज महाराजः पुरूरवाः ।
प्रथमश्चन्द्रवंशस्य राजा भोगान् समश्नुते ॥५६॥

भरत उवाच

कथं स प्रथमो राजा चन्द्रवंशस्य धार्मिकः ।
विहाय लोकान् स्वर्गादीनप्सरलोकमभ्यगात् ॥५७॥

---

५०ab : not found in D
५०cd : not found in H
५३a : ° व्यतिपातं A
५३c-५४d : not found in H
५४a : काचित् FG
५४b : केन वा AF
५५d : ° देहभाक् CD
५६b : महावीर्यः CGH
५७d : अप्सरोलोकम् F
५७a-५८b : not found in A

अस्माकं पूर्वजो राजा महात्मा परमद्युतिः ।
कथं सोऽप्सरसां लोके वसेत् प्राकृतराजवत् ॥५८॥

सुनन्द उवाच

मित्रावरुणयोः शापान्मानुष्यं समुपस्थिता ।
उर्वशी विनयादैलमनुवव्रे वराप्सराः ॥५९॥
आत्मनः शापमोक्षाय समयं सा चकार ह ।
अनग्नदर्शनं चैव सकामायाश्च मैथुनम् ॥६०॥
मेषौ च शयनाभ्यासे सदा बद्धौ च तिष्ठतः ।
घृतमात्रं ममाहारः कालमेकं तु पार्थिव ॥६१॥
यद्येष समयो राजन् यावत्कालं न ते च्यवेत् ।
तावत्कालं मया सार्धं विहारस्ते भविष्यति ॥६२॥
राजापि तस्याः समयं सर्वं तं समपालयत् ।
एवं साप्युर्वशी देवी रेमे तेन महात्मना ॥
वर्षाण्यथैकषष्टिं च तत्सक्ता शापमोहिता ॥६३॥
उर्वश्यां मानुषस्थायां स्वर्गलोकविभूषणे ।
शक्र आहूय गन्धर्वानुवाच चिरमुत्सुकः ॥६४॥

इन्द्र उवाच

चिन्तयध्वं महाभागा यथा सात्र वराङ्गना ।
समागच्छेत् पुनर्देवानुर्वशी स्वर्गभूषणम् ॥६५॥
ततो विश्वावसुर्नाम शक्रमाह महीपते ।
मया तु समयस्ताभ्यां क्रियमाणः श्रुतः पुरा ॥६६॥

---

५९b : मानुषं AeGH
६३f : तत्शक्ता F
६४b : स्वर्गलोकेऽविभूषणं A
६५b : सा तु CH
६५c : दैवान् A

व्युत्क्रान्तसमयं सा वै राजानं त्यक्ष्यते यथा ।
तदहं वेद्म्यशेषेण यथाऽसौ भेत्स्यते नृपः ॥६७॥
ससहायो गमिष्यामि भवतः कार्यसिद्धये ।
एवमुक्त्वा गतस्तत्र प्रतिष्ठानं महायशाः ॥६८॥
निशायामथ चागम्य मेषमेकं जहार सः ।
मातृवद् वर्तते सा तु मेषयोरुर्वशी सदा ॥६९॥
गन्धर्वमागतं ज्ञात्वा शापान्तं च यशस्विनी ।
अब्रवीत् तं महाराजं पुत्रो मे ह्रियते नृपः ॥७०॥
एवमुक्तो विनिश्चित्य नग्नो नैवोदतिष्ठत ।
नग्नसंदर्शनं यावत् समयो हि मया कृतः ॥७१॥
ततो भूयस्तु गन्धर्वा द्वितीयं मेषमाददुः ।
द्वितीये तु हते मेषे ऐलं ब्रूतेऽथ अप्सराः ॥७२॥
पुत्रो मेऽपहृतो राजन् निद्रासि मृतवत् कथम् ।
एवमुक्तस्ततोत्थाय नग्नो राजा प्रधावति ॥
मेषयोः पदमन्विच्छन्नन्धे तमसि भूमिप ॥७३॥
तैरथोत्पादिता विद्युद् यया तद् भवनं महत् ।
विद्योतितं वै सहसा ततो नग्नमुदैक्षत ॥७४॥
दृष्ट्वा नग्नं दिवं प्राप साप्सराः कामचारिणी ।
तिरोभूतां च तां दृष्ट्वा गन्धर्वा दिवमाययुः ॥७५॥
उत्सृष्टौ चोरणौ दृष्ट्वा राजाऽगृह्य गतो गृहम् ।
अपश्यन्नुर्वशीं तत्र विललाप सुदुःखितः ॥७६॥

---

६७d : स यथा C
भर्त्स्यते BFGH भत्स्यते D
७१b : नैवोपतिष्ठत A
७२c : द्वितीयेऽथ C
७४b : यथा A
७६b : ततो A

चचार पृथिवीं कृत्स्नां मार्गमाणः स उर्वशीम्।
अथापश्यच्च तां राजा कुरुक्षेत्रे महाबलः ॥७७॥
प्लक्षतीरे पुष्करिण्यां हिमवत्यां समाप्लुताम् ।
क्रीडन्ती अप्सरोभिश्च पञ्चभिः सह शोभनाम् ॥
तां च तत्र ततो दृष्ट्वा विललाप महीपतिः ॥७८॥
सा पुरूरवसं दृष्ट्वा राजानमविदूरतः ।
उर्वशी ताः सखीः प्राह स एष पुरुषोत्तमः ॥७९॥
यस्मिन्नहमवात्सं वै दर्शयामास तं नृपम् ।
ऐलस्तु तामुवाचाथ घोरे तिष्ठ मया सह ॥८०॥
तवैष विरहात्प्राणान् विमुञ्चामि तवाग्रतः ।
उर्वशी चाब्रवीदैलं सगर्भाऽहं त्वया नृप ॥८१॥
कुमारास्ते भविष्यन्ति पूर्णे संवत्सरे शुभे ।
निशामेकां च नृपते वत्स्यसि त्वं मया सह ॥८२॥
इत्युक्त्वा सा वरारोहा सखीभिः पञ्चभिः सह ।
अन्तर्दधे महाराज राजापि स्वपुरं गतः ॥८३॥
ततः संवत्सरे भूय आजगाम वराप्सराः ।
उवास च तया सार्धमेकरात्रं महायशाः ८४॥
उर्वश्यथाब्रवीदैलं दृष्ट्वा विरहकातरम् ।
यज त्वं भूप गन्धर्वान् दास्यन्त्येते तु मां तव ॥८५॥

---

७७a : सर्वा (for कृत्स्नां) H
८०a : अस्मिन् G
८१a : तदेव C
८२b : पूर्ण A
शुभा: AF
८३d : स्वं AF
८५c : यजस्व C जयध्वम् G
८५d : तत: D

इत्युक्त्वान्तर्हिता देवी गन्धर्वानयजन्नृपः ।
तुष्टास्ते चाप्सरोलोकं तमैलं प्रापयन्नृप ॥
उर्वश्या सह राजेन्द्रो विहरन्नस्ति तत्र च ॥८६॥

भरत उवाच

केनोपायेन राजा स वैकुण्ठं पदमाप्नुयात् ।
तन्मे ब्रूहि कृपापूर्वं मुकुन्दपदसेवक ॥८७॥

सुनन्द उवाच

त्वया यो वैष्णवो यागो विहितः सप्तहायनः ।
तमुद्दिश्य ददस्वाद्य मया तु परमां गतिम् ॥८८॥

शेष उवाच

इति तद्वाक्यमाकर्ण्य भरतो मेदिनीपतिः ।
तद्यागस्य फलं तस्मै उत्ससर्ज महामतिः ॥८९॥
उत्सृष्टमात्रे तत्पुण्ये सद्य एव पुरूरवाः ।
विहायाप्सरसां लोकं वैकुण्ठं पदमभ्यगात् ॥९०॥

इति श्रीपद्मपुराणे स्वर्गखण्डेऽप्सरसोलोकवर्णनं नाम सप्तमोऽध्यायः ॥७॥

---

८६c : वासवलोकं H
८९c : तत् Ae
८९d : स नृपतिः C
९०d : अभ्यगात् BFH
पुष्पिका : इत्यादिमहापुराणे पाद्मे A
नाम not found in H

# ८

सुनन्द उवाच

ततो भानुमतो लोकस्तेजोमय उदाहृतः ।
यत्र देवः सहस्रांशुरेकचक्ररथेन वै ॥१॥
मेरुं प्रदक्षिणीकृत्य भ्रमति प्रतिवासरम् ।
नवतिभिर्योजनानां सहस्रैः संमितेन च ॥२॥
विचित्रेणैकचक्रेण सप्तसप्तियुतेन च ।
अनूरुणाधिष्ठितेन पुरतो धृतरश्मिना ॥३॥
अप्सरोमुनिगन्धर्वसर्पग्रामणिनैर्ऋतैः ।
स्पन्दनेनातिजविना मासि मासि विभिन्नकैः ॥४॥
नामभिश्च द्वादशभिर्मासान् द्वादशसंमितान् ।
दीर्घह्रस्वसमानानि दिनानि प्रतिपादयन् ॥५॥
उदयास्तमनाभ्यां च देवः क्रीडति भानुमान् ।
नियन्ता सर्वभूतानां य एकः कारणं परम् ॥६॥
अनामा गोत्ररहितो रूपादिपरिवर्जितः ।
आविर्भावतिरोभावौ यद्भ्रूनर्तनवर्तिनौ ॥७॥
स एव वक्ति सततं सर्वस्मादादिपूरुषः ।
योऽसावादित्यपुरुषः सोऽसावहमितिस्फुटम् ॥८॥
तमेकमुपतिष्ठन्ते ब्राह्मणा वै जितेन्द्रियाः ।
उपलभ्य च सावित्रीं नोपतिष्ठेत यो द्विजः ।
काले त्रिकालं सप्ताहात् स पतेन्नात्र संशयः ॥९॥

---

२c : योजनानां हि A
३a : विचित्रेणैव D
५a : नामभिः A
६a : °स्तमया° C
९b : विजितेन्द्रियाः C
९c : उपालभ्य A

तावत् प्रतिजपं तिष्ठेद् यावदर्धोदयो रवेः ।
आसनस्थो जपेन्मौनी प्रत्यगातारकोदयात् ॥१०॥
सादित्यां पश्चिमां सन्ध्यां जपेदादित्यसंमुखः ।
काललोपो न कर्तव्यस्ततः कालं प्रतीक्षयेत् ॥११॥
काले फलन्त्योषधयः काले पुष्पन्ति पादपाः ।
वर्षन्ति तोयदाः काले तस्मात् कालं न लङ्घयेत् ॥१२॥
गायत्रीमन्त्रतोयाढ्यं दत्तं येनाञ्जलित्रयम् ।
काले सावित्रीकेन स्यात् तेन दत्तं जगत्त्रयम् ॥१३॥
किं किं न सविता सूते काले सम्यगुपासितः ।
आयुरारोग्यमैश्वर्यं वसूनि च पशूनपि ॥१४॥
अष्टादशसु विद्यासु मीमांसातिगरीयसी ।
ततोऽपि तर्कशास्त्राणि पुराणं तेभ्य एव च ॥१५॥
ततोऽपि धर्मशास्त्राणि तेभ्यो गुर्वी श्रुतिर्नृप ।
ततो ह्युपनिषत्श्रेष्ठा गायत्री च ततोऽधिका ॥१६॥
वाच्यवाचकसम्बन्धो गायत्र्याः सवितुर्द्वयोः ।
वाच्योऽसौ सविता साक्षाद् गायत्री वाचिका परा ॥१७॥
तां देवीमुपतिष्ठन्ते ब्राह्मणा ये जितेन्द्रियाः ।
सूर्यलोकं ते प्रयान्ति क्रमान्मुक्तिं च पार्थिव ॥१८॥
महेन्द्रस्य ततो लोको यमाहुरमरावतीम् ।
तपोबलेन विहितां महता विश्वकर्मणा ॥
दिवाऽपि कौमुदी यस्याः सौधश्रेणीश्रियं श्रयेत् ॥१९॥

---

१०a : ° जपंस्तिष्ठत् D तिष्ठेत् FH
१२a : ज्वलन्त्य° G
१७d : वाचक F
१८a : ° तिष्ठन्ति AC
१८c : सूर्य H
तेऽपि यान्ति D
१९e : कौमुदी H

यदच्छभित्तौ प्रतिविम्बितं स्वं
विलोक्य मुग्धा त्रिदिवेशनारी ।
अन्यां तु देवीं परिशङ्कमाना
विशेन्न चित्रामपि चन्द्रशालाम् ॥२०॥

हर्म्येषु नीलैर्मणिभिर्निविष्टैः
प्रभामयं कार्ष्ण्यमनुप्रतीर्णम् ।
दिवाऽपि राजन् घनमन्धकार-
माश्रित्य तिष्ठत्यभयं सदैव ॥२१॥

यच्चन्द्रकान्तोपलसंस्रवेण
प्रभूतमम्भोऽमरसुन्दरीभिः ।
आहृत्य दिव्यैः कलशैः पतीना-
मयत्नसेकः क्रियते नरेन्द्र ॥२२॥

न स्वर्णकारा न च वै कुविन्दा
न वै कुलालाश्च वसन्ति तत्र ।
चेलान्यलंकारवतीर्घटांश्च
कल्पद्रुमा एव समर्पयन्ति ॥२३॥

न सूपकारा निवसन्ति तत्र
सर्वान् रसान् दोग्धि हि कामधेनुः ।
उच्चैःश्रवा यत्र हयप्रधान-
मैरावतो दन्तचतुष्कशाली ॥२४॥

ऋतुष्वशेषेषु च पारिजातः
पुष्पाणि धत्ते द्युतिमन्ति नित्यम् ।

---

२०c : प्रतिशंकमाना G
२१b : अनुप्रकीर्ण AH
२३a : कुविन्दाः BF
२३c : अलंकारतती: FH
२४a : निवपन्ति F

यन्मण्डनं नाम वनेषु रत्नं
मन्दाकिनी यत्र नदीषु चैव ॥२५॥
त्रिंशत्सुराणामपि कोटयो या
प्रतीक्षमाणा नृपवासवं ताः ।
तिष्ठन्ति काले किल तेन तुल्यः
कोऽन्योऽस्ति लोकः परमः सुखाय ॥२६॥
यद्यत्त्रैलोक्यमैश्वर्यं तेन तुल्यं कुतो नृप ।
अश्वमेधसहस्रस्य लभ्यं विनिमयेन यत् ॥२७॥
किं तेन तुल्यमन्यत्स्यात् पवित्रमथवा महत् ।
पराजयान्महेन्द्रस्य त्रैलोक्यं स्यात्पराजितम् ॥२८॥
दनुजा मनुजाश्चैव तपस्यन्त्युग्रसंयमाः ।
गन्धर्वयक्षरक्षांसि महेन्द्रपदलिप्सवः ॥२९॥
सागराद्या महीपाला वाजिमेधविनायकाः ।
कृतवन्तो महायत्नं शक्रैश्वर्यजिघृक्षवः ॥३०॥
निष्प्रत्यूहं क्रतुशतं यः कश्चित् कुरुतेऽवनौ ।
जितेन्द्रियोऽमरावत्यां स प्राप्नोति पुलोमजाम् ॥३१॥
असमाप्तक्रतुशता वसन्त्यत्र महीभुजः ।
ज्योतिष्टोमादिभिर्यागैर्ये यजन्त्यपि ते द्विजाः ॥३२॥
तुलापुरुषदानादिमहादानानि षोडश ।
ये यच्छन्त्यमलात्मानस्ते लभन्तेऽमरावतीम् ॥३३॥

---

२५d : नदी सुतोया G
२७a : त्रिलोक्यां GH
२७b : तस्य A
२९b : प्रतपन्त्य° D
२९c : °रक्षयक्षांसि A
२९d : °लिप्सया G
३०a : सगराद्या GH
३०b : °विधायकाः AF
३१b : क्षितौ A
३३a : °दानानि ACF

अक्लीववादिनो धीरा ये युद्धेष्वनिवर्तिनः ।
विक्रान्ता वीरशयनेऽमृतास्ते तत्र भूभुजः ॥३४॥
सुधर्मा च सभा तत्र सर्वदेवसुदुर्लभा ।
यत्र शच्या समं शक्रो लक्ष्म्या च परया युतः ॥३५॥
सेव्यते विबुधैः सर्वैः किरीटी लोहिताङ्गदः ।
मरुतः सर्वशो राजन् सर्वे च गृहमेधिनः ॥३६॥
सिद्धा देवर्षयश्चैव साध्या देवगणास्तथा ।
मरुत्वन्तश्च सहिता भास्वन्तो हेममालिनः ॥३७॥
एते चानुचराः सर्वे चारुरूपाः स्वलंकृताः ।
उपासते महात्मानं देवराजमरिन्दमम् ॥३८॥
दक्षिणेऽथामरावत्याः पुरी रत्नैरलंकृता ।
अर्चिष्मती महाराज वीतिहोत्रस्य शोभना ॥३९॥
जातवेदसि ये भक्तास्ते वसन्त्यत्र सुव्रताः ।
अग्निप्रवेशं ये कुर्युर्दृढसत्त्वा जितेन्द्रियाः ॥४०॥
नार्योऽपि सहसम्पन्नाः प्रेत्य तेऽग्निसमप्रभाः ।
अग्निहोत्ररता विप्रा ये चाग्निब्रह्मचारिणः ॥४१॥
कृतपञ्चाग्नयो ये वै तेऽग्निलोके वसन्त्युत ।
शीते शीतापनोदाय यः काष्ठानि प्रयच्छति ।
अग्नीष्टिकारी यो विप्रः स वसेदग्निसन्निधौ ॥४२॥

---

३४a : अक्रूर° A
३६a : विविधैः A
३७b : देवर्षयस्तथा F
३७d : हिममालिनः G
३८a : सानुचराः GH
४१d : ° व्रतचारिणः D
४२a : ये च AF

अनाथस्याग्निसंस्कारं श्रद्धया यः करोत्यपि ।
अशक्तः कारयेदन्यैः सोऽग्निलोके महीयते ॥४३॥
जठराग्निविवृद्ध्यर्थं दद्यादाग्नेयमौषधम् ।
मन्दानलाय विप्राय स वसेद् वह्निपत्तने ॥४४॥
यज्ञोपकरणान्येवं यज्ञार्थं प्रददाति यः ।
यथाशक्त्या महाराज अर्चिष्मत्यां वसेत् स वै ॥४५॥
अग्निरेको द्विजातीनां निःश्रेयसकरः परः ।
गुरुर्देवो व्रतं तीर्थं सर्वमग्निर्विनिश्चितम् ॥४६॥
यच्चाप्यपावनं वस्तु तत् सर्वं वह्निसंगमात् ।
पावनं भवति क्षेमं तस्मात् पावक उच्यते ॥४७॥
अपि वेदं विदित्वा यस्त्यक्त्वा वै जातवेदसम् ।
अन्यत्र बध्नाति मतिं ब्राह्मणः स न वेदवित् ॥४८॥

भरत उवाच

कृशानुः कस्य पुत्रोऽभूत् स्थानं तस्य च किं तथा ।
आग्नेयं सर्वमेतन्मे देवप्रवर कथ्यताम् ॥४९॥

सुनन्द उवाच

मुनिर्विश्वानरो नाम बभूव सुमहातपाः ।
ब्रह्मचर्याश्रमे निष्ठो ब्रह्मयज्ञरतः सदा ॥५०॥
सर्वशास्त्रेषु निपुणः सदाचारविशारदः ।
स चिन्तयामास हृदि आश्रमेषु च को महान् ॥५१॥
इदं भद्रमिदं भद्रमिति कृत्वा विचारयन् ।
गार्हस्थ्यमेव सर्वेषामाश्रमाणाममन्यत ॥५२॥

---

४६d : अग्निविनिश्चितं A
४७a : चास्य H
४९ सुनन्द उवाच not found in G
५०c : ब्रह्मचर्याश्रमनिष्ठः A

ब्रह्मचर्यं तथा वानप्रस्थं भैक्षुकमेव च ।
एषामाधारभूतोऽसौ गृहस्थः सर्वतोऽधिकः ॥५३॥
देवैश्च पितृभिश्चैव तिर्यग्भिरनुजीव्यते ।
यस्माद् गृहस्थ एवासौ ततः श्रेयान् गृहाश्रमी ॥५४॥
इत्थं विचार्य मनसा स च विश्वानरो मुनिः ।
ब्राह्मेणैव विधानेन स्वोचितां कुलकन्यकाम् ॥
उपयेमे विप्रकन्यां नाम्ना राजन् शुचिस्मतीम् ॥५५॥
सदाग्निनिरतो विप्रः षट्कर्मपरिनिष्ठितः ।
देवतापित्र्यतिथिभ्यो यथाकालं विभागकृत् ॥५६॥
पूर्वाह्णे दैविकं कर्म मध्याह्ने च मनुष्यकम् ।
अपराह्णे पितृणां च चकार विधिवन्नृपः ॥५७॥
भार्या शुचिस्मती नाम मुनिमाह शुचिस्मिता ।
नापत्येन विना ब्रह्मन् गार्हस्थ्यं प्रतिभाति मे ॥५८॥
तदपत्यं महाभाग यथा जायेत वीर्यवत् ।
जगत्पूज्यं महातेजो यथा देव उमापतिः ॥५९॥
तथा यतस्व विप्रेन्द्र परमेण समाधिना ।
विश्वानरस्तु तच्छ्रुत्वा विमृश्य मनसि द्विजाः ॥६०॥
वाराणस्यां तपस्तेपे दिव्यं वर्षसहस्रकम् ।
तुष्टो महेश्वरस्तं तु दर्शयामास भूपते ॥६१॥
उवाच च वरं ब्रह्मन् वरयस्व ददामि ते ।
नादेयं मम भक्तेभ्यो वरय त्वं हि निर्भयः ॥६२॥

---

५३b : भिक्षुकं H
५३c : तेषां G
५४c : तस्मात् G यस्मात् H
५६c : देवातिथिपितृभ्यो C
५७c : पित्र्यकर्म G
तु C
६०d : मनसा DH
६२d : विनिर्भयः D

विश्वानर उवाच

भवता सदृशः पुत्रो मम जायेत शंकर ।
नान्यं वरमिहेच्छामि देवदेवात्सुतोषितात् ॥६३॥

शंकर उवाच

ब्रह्मणाऽभ्यर्थितः पूर्वमेवमेव वरं पुरा ।
तस्य पुत्रत्वमगमं तथैवाहं वृतस्त्वया ॥६४॥
को मया सदृशो लोके यस्ते पुत्रो भविष्यति ।
प्रतिश्रुतं ददानीति न मिथ्या तद् भवत्यपि ॥६५॥
सोऽहं पुत्रो भविष्यामि तव ब्रह्मन्निजांशतः ।
इत्युक्त्वान्तर्दधे शम्भुर्मुनिस्तुष्टो गृहानगात् ॥६६॥
अथ काले महाराज मुनिपत्नी शुचिस्मती ।
दधार गर्भं सुश्रोणी पत्युर्विश्वानराच्छुभम् ॥६७॥
ततः सा सुषुवे काले तनयं तीव्रतेजसम् ।
तनयं वै शुभे लग्ने ग्रहेषु शुभदायिषु ॥६८॥
देवता मुनयः सर्वे समाजग्मुर्दिदृक्षया ।
विद्याधर्यश्च किन्नर्यस्तथा नार्यः सहस्रशः ॥६९॥
गन्धर्वोरगयक्षाणां सुभाविन्यः शुभाम्बराः ।
गायन्त्यो ललितं गीतं तत्राजग्मुरनेकशः ॥७०॥

---

६५c : ददामीति F
६६d : स्तुतो G
६८c : केन्द्रे गुरौ शुभे G
६९b : दिदृक्षवः G
७०b : शुभाप्सराः G
७०cd : ललितं तत्राजग्मुर्गीतमनेकशः C
७०c : तत्र (for गीतं) G
७०d : समाजग्मुः AC

ब्रह्मपुत्रा मरीचाद्या जमदग्निमुखास्तथा ।
ब्रह्मापि स्वयमागत्य जातकर्म चकार ह ॥७१॥
श्रुतिं विचार्य तद्रूपं नाम्ना गृहपतिस्त्वयम् ।
इति नाम ददौ तस्मै देयमेकादशेऽहनि ॥७२॥
क्रमेण नवसंस्कारान् प्राप्य ब्राह्मणबालकः ।
तपस्तेपे महाराज स्वतेजोवृद्धिकामया ॥७३॥
अथेन्द्रो भयवित्रस्तस्तदन्तिकमुपाययौ ।
उवाच वचनं विप्र वरं वरय मा तप ॥७४॥

गृहपतिरुवाच

न त्वत्तो वरमिच्छामि देवं पशुपतिं वृणे ।
इन्द्रः क्रुद्धोऽथ वज्रेण प्रजहार महीपते ॥७५॥
वज्रेण निहतो भूमौ पतन्नपि महामुनिः ।
स्मरति स्म महादेवं ततोऽगाद् वृषवाहनः ॥७६॥
तमाह वत्स उत्तिष्ठ न तेऽस्ति कुलिशाद् भयम् ।
दत्तं ते पदमुत्कृष्टं ऐन्द्रादपि सुभास्वरम् ॥७७॥
ततो बालक उत्थाय प्रणम्य गिरिजापतिम् ।
वव्रे तेजश्च सर्वेषामसह्यं भास्वरं महत् ॥७८॥
तथास्त्विति महादेवस्तमुक्त्वान्तर्दधे नृप ।
इति ते कथितं राजन् यथा जातः स हव्यवाट् ।
लोकश्च तादृशस्तस्य स बभूव सुभास्वरः ॥७९॥

भरत उवाच

कथं पुत्रोऽभवच्छम्भुर्ब्रह्मणः परमेष्ठिनः ।
तन्ममाख्याहि भगवन् मुकुन्दपदसेवक ॥८०॥

---

७३d : °काङ्क्षया A
७६d : वृषभध्वजः G
७७b : चास्ति G
७७d : ऐन्द्रचाद् H
८०d : यदि जानासि तत्त्वतः G

सुनन्द उवाच

पुराकल्पे महाराज ब्रह्मा विश्वसृजां पतिः ।
तपस्तेपे सुदुर्धर्षं रुद्रसूक्तं परं जपन् ॥८१॥
बहुवर्षसहस्राणि नियतात्मा जितेन्द्रियः ।
ततस्तुष्टो महादेवो गणैर्बहुभिरावृतः ।
आजगाम महातेजा विहस्य ब्रह्मणोऽन्तिकम् ॥८२॥
उवाच त्वं महाभाग जगत्स्रष्टा जगत्पतिः ।
सर्ववेदविधाता च किमप्राप्यं तवास्ति भोः ॥८३॥
ये तपस्यन्ति विबुधा मुनयो मनुजास्तथा ।
तेषां त्वं वरदो भूत्वा कं वरं प्रार्थ्य तप्यसे ॥८४॥
तस्मात् त्वं कथय ब्रह्मन् भवतः किमपेक्षितम् ।
यदर्थं तप्यसे तीव्रं तपः परमदुश्चरम् ॥८५॥

ब्रह्मोवाच

तपो मे भगवन् विद्धि तव सन्तोषकारणम् ।
तुष्टोऽस्मि मम पुत्रत्वं गच्छ देव वृषध्वज ॥८६॥

शंकर उवाच

दुष्करोऽयं वरो ब्रह्मन् कथमेवं भविष्यति ।
न तवापि तपो घोरं व्यर्थं भवितुमर्हति ॥८७॥

---

८१d : रुद्रं G
८२c : महाराज A
८३c : सर्वदेव° CDG
८४a : ये च पश्यन्ति H
८४b : मानुषाः G
८६c : तुष्टो ममासि FGH
शंकर उवाच not found in D
८७b : एव ACe

अस्य कल्पस्य वै देव क्षयो भवतु पद्मज ।
पुनः कल्पे तु वाराहे भविष्यामि तवात्मजः ॥८८॥
इत्युक्त्वान्तर्दधे शम्भुर्ब्रह्माऽपि स्वालयं ययौ ।
तस्मिन् कल्पे गते राजन् विष्णोर्नाभिसरोरुहात् ॥८९॥
पुनर्जातो यदा ब्रह्मा सर्गार्थमुपचक्रमे ।
ससृजे मानसान् पुत्रान् प्रथमं पद्मसंभवः ॥९०॥
सनकं च सनन्दं च तृतीयं च सनातनम् ।
सनत्कुमारं भगवान् ऋषीन् परमतेजसः ॥९१॥
तानुवाच महाराज ब्रह्मा सृजत पुत्रकाः ।
प्रजाः परमधर्मिष्ठा याभिः सम्पूर्यते जगत् ॥९२॥
ते तमूचुर्महात्मानो न सृजामो वयं प्रजाः ।
तपसाराधयिष्यामो भगवन्तमधोक्षजम् ॥९३॥
संसारो बहुदोषाढ्यो मुक्तिमार्गनिरोधकः ।
पराभवः परस्माच्च ज्ञानिनां मतिदूषकः ॥९४॥
इत्युक्त्वा ते तपोनिष्ठा अभवन्नूर्ध्वरेतसः ।
चुकोप च ततो ब्रह्मा ज्वलन्निव हुताशनः ॥९५॥
ततः कोपं स्वपुत्रेभ्यः कृतमन्याय्यमित्यपि ।
विचार्य परिवर्धन्तं नियन्तुमुपचक्रमे ॥९६॥
यत्नान्नियम्यमानोऽपि स कोपः परमेष्ठिनः ।
भ्रुवोर्मध्यादथोद्भूतः कुमारो नीललोहितः ॥९७॥
जातमात्रः कुमारोऽसौ रुरोद भगवान् भवः ।
ब्रह्मोवाच कथं पुत्र रोदिषि त्वं महाबल ॥
तन्मे कथय कार्यं ते सद्यः सम्पादयाम्यहम् ॥९८॥

---

८८a : देवेश (for वै देव) CeFGH
८८b : भवतु वै तव CeFGH
९४d : °दुष्करः G
९७a : रत्नान् D
९८a : जातपुत्रः D
कुमारो वै A

रुद्र उवाच

नामानि कुरु मे ब्रह्मन् स्थानानि च जगद्गुरो ।
पत्नीश्च देहि भगवंस्ततः शान्तिर्भविष्यति ॥९९॥

ब्रह्मोवाच

जानामि त्वां देवदेवं पूर्वं दत्तं वरं मम ।
सत्यं कर्तुं भवाञ्जातस्त्वं हि सर्वेश्वरेश्वरः ॥१००॥

जातमात्रो रोदिषि त्वं ततो रुद्र इति स्मृतः ।
नामान्यन्यानि ते देव विधास्ये शृणु पुत्रक ॥१०१॥

ऋतध्वजो मनुर्मन्युरुग्ररेता महाशिवः ।
भवः कालो महिनसो वामदेवो धृतव्रतः ॥१०२॥

एतानि तव नामानि ये स्मरन्ति नरा भुवि ।
तेषां सदैव कल्याणं करिष्यसि महामते ॥१०३॥

स्थानानि च प्रवक्ष्यामि तेषु वासो विधीयताम् ।
इन्द्रियाण्यसुभृद्व्योम वायुरग्निर्जलं मही ॥१०४॥

तपश्चन्द्रश्च सूर्यश्च स्थानान्येतानि ते भव ।
धृतिर्धीरसिलोमा च नियुत्सर्पिरिलाम्बिका ॥१०५॥

इरावती स्वधा दीक्षा योषितस्तव सुन्दरी ।
प्रजाः सृज महाभाग जगदेतत्प्रपूरय ॥१०६॥

इत्यादिष्टः स भगवान् ब्रह्मणा नीललोहितः ।
सृष्टवान् स प्रजा बह्वीर्भूतप्रेतपिशाचकान् ॥१०७॥

---

१०२b : महान् शिवः H
१०३cd : कुशलं विधास्यसि G
१०३d : करिष्यामि D
१०६b : सुन्दरीः B
१०७a : इत्यादिष्टः not found in G

कुष्माण्डान् विकृताकारान् भैरवान् भीमनादिनः ।
तान् दृष्ट्वा तु तदा ब्रह्मा जगद्‌विद्रावकान् बहून् ॥१०८॥
वारयामास पुत्र त्वं मा स्राक्षीरीदृशीः प्रजाः ।
तपसा विष्णुमाराध्य विहरस्व यथासुखम् ॥१०९॥
इति ते कथितो राजन् रुद्रसर्गः प्रजापतेः ।
यं श्रुत्वाऽपि नरः सद्यो जह्याद् भूतकृतं भयम् ॥११०॥

इति श्रीपद्मपुराणे स्वर्गखण्डे रुद्रसर्गोऽष्टमोऽध्यायः ॥८॥

---

१०८d : बहून् not found in G

पुष्पिका : इत्यादिमहापुराणे पाद्मे A

# ६

सुनन्द उवाच

दक्षिणस्यां ततो राजन् रम्या संयमनी पुरी ।
प्राप्य पुण्यवतामेव पापिनां त्वपरा पुरी ॥१॥
भयानका सान्धकारा नानानरकसंकुला ।
अधस्तादेव मेदिन्यां दक्षिणस्यां दिशि प्रभो ॥२॥
इयमन्या महापुण्या ऐन्द्रा अपि सुखप्रदा ।
यत्र देवः कृतान्तोऽसौ सौम्यरूपः प्रियंवदः ॥३॥
दृश्यते तेन रूपेण पुण्यकृद्‌भिर्हि मानवैः ।
धर्ममूर्तिः प्रकृत्यैव निःशङ्कैः पुण्यराशिभिः ॥४॥
अयमेव हि पिङ्गाक्षः क्रोधरक्तान्तलोचनः ।
दंष्ट्राकरालवदनो विद्युज्ज्वलनमालिनः ॥५॥
पापिनामेव राजेन्द्र वसत्यन्यपुरे यमः ।
देहान्तरेण पापानां यातनार्थं भटैः सह ॥६॥
पश्चिमे संयमन्यास्तु नैर्ऋतानां पुरी शुभा ।
वसन्ति राक्षसास्तस्यामपरद्रोहिणस्तथा ॥७॥
नाममात्रेण रक्षांसि पुण्यैः पुण्यजनाः स्मृताः ।
श्रुतिमार्गेण वर्तन्ते जाता जात्यन्तरेष्वपि ।
नाद्रियन्तेऽन्नपानानामवेदोक्तं कथंचन ॥८॥

---

३b : ऐन्द्रचा GH
४b : मानवैः not found in G
४d : निःशंकः G
५d : ° भीषणः (for ° मालिनः) BCFGH
८c : ° मात्रेण C
८f : यावदुक्तं AC

परदारपरद्रव्यपरद्रोहपराङ्मुखाः ।
जाता योनौ निकृष्टायामपि पुण्यानुसारिणः ॥९॥
द्विजातिभक्त्युत्पन्नार्थैरात्मानं पोषयन्ति ये ।
सदा संकुचिताङ्गाश्च द्विजसंभाषणादिषु ॥१०॥
तीर्थसेवापरा नित्यं नित्यं देवपरायणाः ।
प्रणता ब्राह्मणकुले स्वनामाख्यानपूर्वकम् ॥११॥
दमदानदयाक्षान्तिशौचेन्द्रियविनिग्रहाः ।
अस्तेयं सत्यहिंसा च सर्वेषां धर्महेतवः ॥१२॥
आवश्यके सदोद्युक्ता ये जाता यत्र कुत्रचित् ।
ते वसन्ति पुरे तत्र समृद्धाः सर्वभोगिनः ॥१३॥
म्लेच्छा ये च सुतीर्थेषु नात्मघातेन भूमिप ।
प्राणांस्त्यजन्ति पुण्येन तेन तत्र वसन्ति ते ॥१४॥
अन्धे तमसि मज्जन्ते ये चाप्यात्महनो जनाः ।
भुक्त्वा निरयसाहस्रं भवन्ति ग्राम्यशूकराः ॥१५॥
आत्मघातो न कर्तव्यस्तस्मात् क्वापि विपश्चिता ।
इह चामुत्र राजेन्द्र शुभं नैवात्मघातिनाम् ॥१६॥
प्रयागे सर्वतीर्थानां राज्ञि सर्वाभिलाषदे ।
अन्त्यजा अपि ये केचिद् दयाधर्मानुसारिणः ।
परोपकृतिनिष्ठास्ते तत्र वासं लभन्ति हि ॥१७॥

---

१०a : उत्पन्नार्थम् D
१२a : मद° A
१२c : सत्यास्तेयमहिंसा न G
१५a : वर्त्तन्ते A
१५b : वाप्य° eF
१५d : ग्राम° BCH
१६b : तस्माद् वापि AC
१७c : केचित् Ce
१७f : भवन्ति हि H

भरत उवाच

दिक्पालास्तत्र को नाम तं लोकं केन कर्मणा ।
अध्यास्ते ब्रूहि गोविन्दपदाम्भोजमधुव्रत ॥१८॥

सुनन्द उवाच

मध्ये विन्ध्याटवेः पुरा पक्वनस्थजनाग्रणीः ।
पल्लीपतिरभूद् विप्रः पिङ्गाक्षो नाम नामतः ॥१९॥
निर्विन्ध्ययोस्तटे शूरः क्रूरधर्मपराङ्मुखः ।
घातयेद् दूरसंस्थोऽपि स पान्थपरिपन्थिनः ॥२०॥
व्याघ्रादीन् दुष्टसत्त्वांश्च स हिनस्ति प्रयत्नतः ।
जीवन्मृगयुधर्मेण तत्रापि करुणापरः ॥२१॥
न विश्वस्तान् हन्ति पशून् न सुप्तान् न व्यवायिनः ।
न तोयकाङ्क्षिणो बालान् नान्तर्वत्नीं त्वलक्षणाम् ।
स घातयति धर्मात्मा जातिधर्मापराङ्मुखः ॥२२॥
पान्थेभ्यः श्रान्तियुक्तेभ्यः स विश्रामं प्रयच्छति ।
क्षुधार्तान् भोजयामास ददौ चापि उपानहम् ॥२३॥
विवस्त्रेभ्योऽपि वस्त्राणि प्रददावजिनानि च ।
अनुव्रजति कान्तारे गहने पथिकानपि ॥२४॥
नाजिघृक्षद् धनं तेषामभयं च प्रयच्छति ।
आविन्ध्याटवि मे नाम ग्राह्यं दस्युभयापहम् ॥२५॥
नित्यं कार्पटिकान् सर्वान् पिङ्गाक्ष इत्यशासयत् ।
इति कार्पटिकास्तुष्टास्तीर्थे तस्या दुराशिषः ॥२६॥

---

१८d : ° पादाम्बुज °F
१९a : विन्ध्याटवि GH
२०b : क्रूरकर्म° H
२१d : तथापि D
२२d : अलक्षणान् G
२२f : जातिधर्म° H
२३c-२५b : not found in G

एवं तस्याथ वासेन साटवी नगरान्विता ।
अध्वनीनोऽध्वगान् कोऽपि न रुणद्धि ससाध्वसः ॥२७॥
कदाचित् तत्पितृव्येण समीपग्रामवासिना ।
श्रुतः कार्पटिकानां हि सार्थः साधनसञ्चयः ॥२८॥
लुब्धकस्तद्धने लुब्धः क्षुद्रस्तन्निधनोद्यतः ।
तेषां रुरोध पन्थानमग्रे गत्वा महाबलः ॥२९॥
सार्थे देवप्रसादाद्धि पिङ्गाक्षो मृगयां गतः ।
तस्मिन्नरण्ये रात्रौ स उवास कृतजागरः ॥३०॥
परप्राणद्रुहां पुंसां न सिद्ध्यन्ति मनोरथाः ।
न चिन्तयेदनिष्टानि कस्यचिच्च कदाचन ।
विधिदृष्टं यतो भावि कलुषं केवलं भवेत् ॥३१॥
तस्मादात्मसुखं प्रेप्सुरनिष्टं नैव चिन्तयेत् ।
चिन्तयेच्च तदा चिन्त्यो मोक्षोपायो न चेतरः ॥३२॥
प्रभातायां तु यामिन्यामभूत् कोलाहलो महान् ।
घातयध्वं घातयध्वं मारयध्वं द्रुतं भटाः ॥३३॥
मा मारयध्वं त्रायध्वं भटाः कार्पटिका वयम् ।
लुण्ठयध्वं सुखेनैव यानि सन्ति धनानि नः ॥
वयं पिङ्गाक्षविश्वासाद् वनेऽस्मिन्नकुतोभयाः ॥३४॥
इति श्रुत्वा तु पिङ्गाक्षो भटकार्पटिकैरितम् ।
दूरान्मा भैष्ट मा भैष्ट वदन्नेवं समागतः ॥३५॥
कोऽयं कोऽयं दुराचारः पिङ्गाक्षे मयि जीवति ।
जिघांसुरेति पान्थान् नो बहिश्चारानसून् मम ॥३६॥

---

२७b : नगरायिता C
२७d : °साध्वजः G
२९d : दत्वा AeF
३४a : त्रायध्वं not found in C

इति तद्वाक्यमाकर्ण्य ताराक्षस्तत्पितृव्यकः ।
धनलोभेन पिङ्गाक्षे पापं पापो व्यचिन्तयत् ॥३७॥
कुलधर्मं परित्यज्य वर्तते कुलपांसनः ।
तदेनं घातयिष्यामि सदा विघ्नकरं मम ॥३८॥
विचार्येति दुराचारो भृत्यानाज्ञापयत् क्रुधा ।
हन्यतामेष एवादौ हन्तव्याः पथिकास्ततः ॥३९॥
ततोऽयुध्यन् दुराचारास्तेनैकेन तेऽखिलाः ।
यथा कथंचित्ताननयत् स च स्वावसथान्तिकम् ॥४०॥
ततः कार्पटिका याताः प्राप्तप्राणाः कृताशिषः ।
स तैर्युध्यन् महाबाहुर्वाणैर्निहतमस्तकः ॥४१॥
इति प्राणान् विसृज्यासौ परार्थं रणमूर्धनि ।
दिगीश्वरत्वं प्राप्तोऽसौ नैर्ऋत्यां नैर्ऋतेश्वरः ४२॥
एतस्योत्तरतो लोको वरुणस्य महात्मनः ।
कूपवापीतडागानां कर्तारो निर्मलैर्जलैः ॥४३॥
तत्र लोके महीयन्ते वारुणे वरुणप्रभाः ।
निर्जले जलदातारः परसंतापहारिणः ॥४४॥
अर्थिभ्यो ये प्रयच्छन्ति वस्त्रक्षत्रकमण्डलून् ।
पानीयशालिकाः कुर्युर्नानोपस्करसंयुताः ॥४५॥
दद्युर्धर्मघटांश्चापि सुगन्धिजलपूरितान् ।
अश्वत्थमेकं ये कुर्युः पथि पादपरोपकाः ।
विश्रामगृहदातारः पान्थसन्तापनाशकाः ॥४६॥

---

३८d : तदा C
३९d : तथा (for ततः) A
४०b : तेनैकेन च तेऽखिलाः G
४१c : शतैः B
४४b : वारुणे not found in G
४४d : °कारिणः G

ग्रीष्मनाशाय मायूरपिच्छादिरचितान्यपि ।
तालवृन्तानि चित्राणि वितरन्ति तपागमे ॥४७॥
विश्राणयन्ति चातृप्तिपानकानि प्रयत्नतः ।
इक्षुक्षेत्राणि सम्पाद्य ब्राह्मणेभ्यो ददत्यपि ॥४८॥
गोरसान् ये प्रयच्छन्ति तथा गोदानकारिणः ।
धारामण्डपकर्तारश्छायामण्डपकारिणः ॥४९॥
सुरालयेषु ये दद्युर्बहुधारा गलन्तिकाः ।
तीर्थे चाकरकर्तारस्तीर्थमार्गप्रशोधकाः ॥५०॥
अभयं ये प्रयच्छन्ति भयादुद्यतपाणये ।
निर्भया वारुणे लोके ते वसन्ति रमन्ति च ॥५१॥
विपाशानपि कुर्वन्ति ये नरान् कण्ठपाशितान् ।
ते पाशपाणेर्लोके च निवसन्त्यकुतोभयाः ॥५२॥
नौकाद्युपायैः पान्थान् ये नद्यादौ तारयन्त्यपि ।
तारयन्त्यपि दुःखाब्धौ ये च नागरिका नृप ॥५३॥
घट्टान् पुण्यतटिन्यादेर्वर्धयन्ति शिलादिभिः ।
तोयार्थे सुखसिद्ध्यर्थं ये नरास्ते तु वारुणे ॥५४॥
विहरन्ति सदा राजंस्तृषितान् शीतलैर्जलैः ।
तर्पयन्ति च ये चापि ते च तत्र वसन्त्युत ॥५५॥
जलाशयानां सर्वेषां स एवैकतमः पतिः ।
प्रचेता यादसां नाथः साक्षी सर्वेषु कर्मसु ॥५६॥

---

४७b : °पुच्छादि° DG
४७d : विवरन्ति F
 तपोगमे G
४८d : प्रयच्छति C
५०d : °प्रशोधिका: A
५४a : घण्टान् G
५४d : ते नराः G
५५c : अर्पयन्ति A

भरत उवाच

कस्य पुत्रो महाभाग वरुणोऽयं दिगीश्वरः ।
केनाथ कर्मणा प्राप दिक्पतित्वं च तद्वद ॥५७॥

सुनन्द उवाच

आसीन्मुनेरमेयात्मा कर्दमस्य प्रजापतेः ।
शुचिस्मानिति विख्यातस्तनयो विनयान्वितः ॥५८॥
स्नातुमभ्याययौ बालोऽप्यक्षोदे मुनिबालकैः ।
क्रीडमानं जले बालं शिशुमारोऽहरद् द्रुतम् ॥५९॥
ततस्तस्मिन् हृते बाले शिशुभिः कथितं पितुः ।
तच्छ्रुत्वा स महातेजा ध्यानेनालोकयत्तदा ॥६०॥
नानाभूतानि भूतानि ब्रह्माण्डान्तर्गतानि वै ।
चन्द्रसूर्यर्क्षताराश्च सरितः पर्वतान् द्रुमान् ॥६१॥
वनान्युद्यानकारामानरण्यानि सरांसि च ।
वापीकूपतडागानि पुण्याः पुष्करिणीर्बहु ॥६२॥
एकस्मिन् क्वापि सरसि जलक्रीडापरायणान् ।
बहून् मुनिकुमारांश्च मज्जनोन्मज्जनादिभिः ॥६३॥
करताडितपानीयशब्दद्दिङ्मुखनादिभिः ।
जलखेलनकैरित्थं संयुक्तान् मुनिबालकान् ॥६४॥
तेषां मध्ये ददर्शाथ समाधिस्थः स कर्दमः ।
स्वसुतं शिशुमारेण नीयमानं सुविह्वलम् ॥६५॥
कयाचिज्जलदेव्याऽथ तस्माच्च क्रूरयादसः ।
प्रसह्य नीत्वोदधये दृष्टवांस्तं समर्पितम् ॥६६॥

---

६०d : ततः C
६४c : जले C
६५d : नीयमानं not found in A
६६c : प्रगृह्य C

एवं विचिन्त्य सहसा कर्दमो भगवानृषिः ।
चुकोप सिन्धवे राजंस्तत्तीरमुपसेदिवान् ॥६७॥
मुखादग्निमथोत्पाद्य समुद्रं दग्धुमुद्यतः ।
संभ्रान्तनक्रमकरः शोष्यमाणः सरित्पतिः ॥६८॥
बालं रत्नैरलंकृत्य बद्ध्वा तं शिशुमारकम् ।
तस्मै समर्पयामास कृतपाणिपुटाञ्जलिः ॥६९॥
कर्दमस्तु सुतं प्राप्य सर्वाभरणभूषितम् ।
तोयार्द्रकाकपक्षाग्रं कषायनयनाञ्चलम् ॥७०॥
कृतप्रणाममालिङ्ग्य मूर्ध्न्यजिघ्रन् महातपाः ।
पुनर्जातामिवामंस्तापश्यच्चापि मुहुर्मुहुः ॥७१॥
ततः स मुनिवर्योऽपि विज्ञाय जगदस्थिरम् ।
प्रतस्थे काननायैव पुनर्भवनिवृत्तये ॥७२॥
शुचिस्मांस्तु तपस्तेपे स्मरन्देवं पितामहम् ।
षष्ठिवर्षसहस्राणि निराहारो जितेन्द्रियः ॥७३॥
तस्याविरासीद् ब्रह्मापि सर्वदेवगणैर्वृतः ।
उवाच कार्दमे ब्रूहि किमर्थं तप्यते तपः ।
वरदोऽहमिहायातो गृहाण मनसेप्सितम् ॥७४॥

कार्दमिरुवाच

यदि नाम प्रसन्नोऽसि देवदेव पितामह ।
सर्वासामाधिपत्यं मे देह्यपां यादसामपि ॥७५॥
इति श्रुत्वा महाराज ब्रह्मा विश्वसृजां पतिः ।
अभ्यषिञ्चत तं तत्र परमे वारुणे पदे ॥७६॥

---

७० : not found in A
७१b : अजिघ्रत G
७१d : पुनः (for मुहुर्मुहुः) G
७४d : तप्यसे GH
७४e : इहागतो A
७६ : not found in A

देवाश्च सर्वे संहृष्टा अभ्यसिञ्चन् मुनेः सुतम् ।
रत्नानामब्धिजातानामब्धीनां सरितामपि ॥७७॥

सरसां पल्वलानां च वाप्यम्बुस्रोतसां पुनः ।
जलाश्रयानां सर्वेषां प्रतीच्याश्चैव वै दिशः ॥७८॥

पतिं चक्रुर्महात्मानं पाशांश्चास्मै ददुः सुराः ।
स एव वरुणो नाम प्रतीच्या दिश ईश्वरः ॥७९॥

इति श्रीपद्मपुराणे स्वर्गखण्डे सुनन्दभरतसंवादे नवमोऽध्यायः ॥९॥

---

७७ : not found in A
७७d : सरसामपि G
७८a : सरितां G
७८b : अपि H

पुष्पिका : इत्यादिमहापुराणे पाद्मे A

सुनन्द उवाच

तदुत्तरे गन्धवती पुरी वायोर्महात्मनः ।
तस्यां प्रभंजनो नाम जगत्प्राणो दिगीश्वरः ॥१॥
तालवृन्तस्य वातेन केशरचामरेण वा ।
वीजयन्ति नरा ग्रीष्मे ये विप्रे व्यजनप्रदाः ।
ते प्रेत्य निवसन्त्यत्र महाराज सुखोदयाः ॥२॥
जन्म चास्य महाराज कथयामि यथाश्रुतम् ।
सप्तसप्तकसंख्यास्य यथासीत् तद् वदामि ते ॥३॥
हतपुत्रा दितिर्भूप महेन्द्रेण बलीयसा ।
कश्यपं पतिमाराध्य तोषयामास भाविनी ॥४॥
स उवाच महातेजा वरं वरय सुव्रते ।
आत्माऽयं कर्षितोऽत्यर्थं मदर्थं चारुलोचने ॥५॥

दितिरुवाच

हतपुत्रा महेन्द्रेण पुत्रमिन्द्रहणं वृणे
तद्विदो हि पतिर्यस्यास्तस्याः कोऽर्थो नु दुर्लभः ॥६॥
कश्यपस्तु विषण्णोऽभून्नारीणां विमृषन् कृतम् ।
विचारयन् वचः प्राह मनसा स महातपाः ॥७॥
इन्द्रहा भविता पुत्रो व्रतमेतन्मनस्विनि ।
संवत्सरं पालय त्वं नियमेन समाधिना ॥८॥
प्रातःस्नानं विधायाथ पूजयेन्मधुसूदनम् ।
तन्त्रोक्तेन विधानेन व्रते पुंसवने सति ॥९॥

---

२c : वीजयन् C
३d : प्रवदामि ते F

नियमाञ्छृणु सुश्रोणि कथयामि सुदुष्करान् ।
नाधौतवासा तिष्ठेस्त्वं नाशुचिर्नाधृतव्रता ॥१०॥
नोच्छिष्टं कस्यचिद् भुङ्क्ष्व धौतपादा वसेः सदा ।
नोच्छिष्टहस्ता नाचान्ता स्वपेस्त्वं क्व च भाविनि ॥११॥
न मुक्तकेशा भुञ्जीथा द्विकालं वा मनस्विनी ।
नाश्नीया भ्रष्टद्रव्याणि तैलामिषविवर्जिता ॥१२॥
अन्यांश्च नियमानुक्त्वा कश्यपोऽथ सुदुष्करान् ।
प्रियां प्राह महाराज स्मरन्देवेन्द्रवैशसम् ॥१३॥
व्रतछिद्रं न ते चेत्स्यादिन्द्रहा भविता सुतः ।
अमृत्युरजरो देवि ह्यन्यथा देवबान्धवः ॥१४॥
तच्छ्रुत्वा तु दिती राजन् पत्युर्गर्भमधात् सती ।
चकार च व्रतं तच्च यथोक्तं पतिना सती ॥१५॥
तद् विज्ञाय महेन्द्रस्तु छद्मरूपी महीपते ।
सिषेवे ब्राह्मणो भूत्वा वटुस्तां दितिमुन्मनाः ॥१६॥
सापि विश्वासमापेदे सेविता तेन भाविनी ।
एकदा तु व्रतश्रान्ता सुतरां गर्भिणी दितिः ।
उच्छिष्टहस्ता भूपृष्ठे निदद्रौ दैवमोहिता ॥१७॥
तच्छिद्रं प्राप्य देवेन्द्रः प्रविष्ट उदरं दितेः ।
गर्भं चकर्त वज्रेण सप्तधा परिशंकितः ॥१८॥

---

१०c : तिष्टेदं C
११b : क्वचित् (for सदा) C
११d : क्वापि AG
१२c : नाश्नीयाद् H
भृष्ट° G
१५a : अथ (for तु) AF
१५d : तथोक्तं F
१६b : °रूपो D
१७f : देव° A

अरुदन् गर्भखण्डानि प्राणवन्ति तथापि हि ।
मा रोदीरिति तानुक्त्वा चकर्त च पुनर्हरिः ॥१९॥
एकैकं सप्तधा चक्रे म्रियन्ते स्म तथापि न ।
सप्त सप्ताथ ते भूत्वा महेन्द्रमिदमब्रुवन् ॥२०॥
कथं नो हन्सि देवेन्द्र सखायस्ते वयं विभो ।
साधयामः सदा कार्यं त्वयानुमतमेव हि ॥२१॥
इन्द्रोऽपि विस्मितो भूत्वा निवृत्तो गर्भकृन्तनात् ।
तेऽपि जाता महाबाहो बलवन्तोऽमरप्रभाः ॥२२॥
दितिस्तु संज्ञां संप्राप्य दृष्ट्वाऽग्रे च सुतान् बहून् ।
शक्रं तत्र च राजेन्द्र पप्रच्छ किमिदं त्विति ॥२३॥
इन्द्रः प्राह न मातर्मे शापं दातुमिहार्हसि ।
इमे हि भ्रातरो देवि सखायो मम ते सुताः ॥२४॥
विज्ञाय व्यवसायं ते बहुरूपेण च स्थितः ।
छिद्रान्वेषी गर्भमेतं चकर्ताहं स्वसाधकः ॥२५॥
तपःप्रभावात् ते देवि न गर्भस्ते ममार वै ।
सप्त सप्ताभवन् पुत्राः सखायो मम मारुताः ॥२६॥
दितिस्तुष्टा तु देवेन्द्रमनुजज्ञे महामनाः ।
महेन्द्रोऽपि स्वरागत्य तेषां मुख्यं प्रभञ्जनम् ॥२७॥
उदक्पश्चिमयोरन्तर्दिक्पालं तं चकार ह ।
तत् प्राच्यां तु कुबेरस्य अलका नाम वै पुरी ॥२८॥

---

१९a : व्यरुदन् CGH रुरुदन् F
२२b : °कृन्तने ACGH
२३d : दितिः D
२६b : गर्भोऽयं A
२७c : स चागत्य A

कुबेरो भगवानस्याः सखा शम्भोः प्रियः पतिः ।
लंका नाम पुरी याऽसीत् वसतिस्तस्य वै पुरा ॥२९॥
रावणेन ततो भ्रात्रा सा हृता वै दुरात्मना ।
तां परित्यज्य नृपते पित्रादेशादिहागतः ॥३०॥
निधीनां पद्ममुख्यानां दाता भोक्ता महीपते ।
यक्षसां राक्षसानां च पतिः परमधार्मिकः ॥३१॥
धनानि ददते ये तु ब्राह्मणेभ्यः क्रियान्विताः ।
ते वसन्त्यलकायां वै कुबेरेण प्रपूजिताः ॥३२॥

भरत उवाच

कुबेरः कस्य पुत्रोऽभूत् शूलपाणिः कथं सखा ।
कथय त्वं न चाज्ञातं भवतो विद्यते क्वचित् ॥३३॥
रावणः कथमेतस्य लंकावासं निराकरोत् ।
किं वैरं तस्य तेनाभूत् तच्चापि वद विस्तरात् ॥३४॥

सुनन्द उवाच

ब्रह्मणो मानसः पुत्रः पुलस्त्यो नाम वै ऋषिः ।
कर्दमस्य सुतायां तु जातस्तस्य हरिर्भुवि ॥३५॥
विश्रवा नाम सुमहान् ऋषिः पावकसन्निभः ।
तनयस्त्वभवत् तस्येडविडायां महामते ॥३६॥
महाबलो महात्मा च स ब्रह्माणमतोषयत् ।
तुष्टस्तत्तपसा ब्रह्मा ददौ वैश्रवणस्य ह ॥३७॥
अमरत्वं धनेशत्वं लोकपालत्वमेव च ।
ईशानेन तथा सख्यं पुत्रं च नलकूबरम् ॥३८॥
राजधानीनिवेशं च लंकां रक्षोगणान्विताम् ।
विमानं पुष्पकं नाम कामगं च ददौ प्रभुः ॥३९॥

---

३४d : विस्तराद् वद् G
३९b : लंका...... ता D
३९d : विभुः C

यक्षाणामाधिपत्यं च राजराजत्वमेव च ।
सुमाली राक्षसो नाम पूर्वमासीद् महाबलः ॥४०॥
स विष्णुना तु समरे हतसैन्यः पराजितः ।
प्राणमात्रेणावशिष्टः प्रविवेश रसातलम् ॥४१॥
कस्यचित् त्वथ कालस्य सुमाली स तु राक्षसः ।
मर्त्यलोकं समासाद्य विचचार महाबलः ॥४२॥
गगने च तदाऽपश्यद् गच्छन्तं वै धनेश्वरम् ।
पुष्पकेन विमानेन ज्वलन्तं परया श्रिया ॥४३॥
तेजोरूपं च तं दृष्ट्वा चिन्तयामास राक्षसः ।
किं नु कृत्वा भवेच्छ्रेयः कथं वर्धामहे वयम् ॥४४॥
नारदं च ततो दृष्ट्वा पप्रच्छ स निशाचरः ।
कोऽयं याति विमानेन कस्य पुत्रो महाबलः ॥४५॥
नारदस्त्वाह पौत्रस्य ब्रह्मणो जगदात्मनः ।
मुनेर्विश्रवसो रक्षः कुबेरस्तनयो महान् ॥४६॥
पुष्पकेन विमानेन प्रयाति पितुरन्तिकम् ।
लंका नाम पुरी चास्य दत्ता वासाय वेधसा ॥४७॥
तच्छ्रुत्वा नारदाद् वाक्यं चिन्तयामास राक्षसः ।
सुतां विश्रवसे दद्यां नैकषीं वरवर्णिनीम् ॥४८॥
इति चिन्त्यानाय्य पुत्रीमुवाच स निशाचरः ।
पुत्रानुत्पादयास्मात् त्वं कुबेरसमतेजसः ॥४९॥
पुत्रि त्वं मम वाक्येन भज विश्रवसं मुनिम् ।
त्वयि पुत्रि समासक्तः कामः सम्पाद्यतेऽचिरात् ।
सा त्वं मुनिवरं पुत्रि प्रजापतिकुलोद्भवम् ॥५०॥

---

४०a : रक्षाणां A
४२d : प्रविवेश (for विचचार) C
४५c-४६d : not found in A
४७a – ४९b : not found in A
५०a : मम वाक्येन पुत्रि त्वं G

याहि विश्रवसं नाम पौलस्त्यं भज शोभने ।
कुबेरसदृशाः पुत्रा भविष्यन्ति न संशयः ॥५१॥
सा पितुर्वचनं श्रुत्वा नैकषी पितृगौरवात् ।
गत्वाश्रमपदं तस्थौ यत्र तप्यति विश्रवाः ॥५२॥
मुनिरास्ते समाधिस्थो नान्वपश्यत राक्षसीम् ।
एवं सा ऋतुकाले वै नवकृत्वः समभ्यगात् ॥५३॥
सिषेवे परया भक्त्या समित्पुष्पकुशादिभिः ।
क्रियोचितैरुपानीतैर्गृहसम्मार्जनादिभिः ॥५४॥
दशमे सा ऋतौ प्राप्ते आजगाम निशाचरी ।
तथैव च सिषेवे सा प्राबुध्यत मुनिस्तदा ॥५५॥
उवाच च महाभागे कासि कस्यासि सुन्दरि ।
किं कार्यं कस्य वा हेतोस्तत्त्वतो ब्रूहि मे शुभे ॥५६॥
एवमुक्ता तु सा कन्या कृताञ्जलिरथाब्रवीत् ।
राक्षसीं विद्धि मां ब्रह्मन् शासनात्पितुरागताम् ॥५७॥
नैकषीत्यपि नाम्ना वै विशेषं ज्ञातुमर्हसि ।
तपसैव महाभाग यदर्थमहमागता ॥५८॥
ध्यानं कृत्वा महातेजाः सर्वं तद् बुबुधे धिया ।
स जगाद पृथुश्रोणि ज्ञातं तव मनोगतम् ॥५९॥
सुतं वाञ्छसि मत्तस्त्वं गजेन्द्रवरगामिनी ।
वेलायामतिघोरायामागतासि यतः शुभे ॥६०॥
तस्मात्सुतं प्राप्स्यसि त्वं महाघोरं दुरासदम् ।
नव ते ऋतवो भग्ना दशमो ह्यद्य वर्तते ॥६१॥

---

५२c–५३b : not found in F
५३cd : एवं सा नवकृत्वो वै ऋतुकाले समभ्यगात् C
५५d : ततो मुनिः C
५६d : तत्त्वं मे ब्रूहि वै शुभे AF

अतः सुतस्ते भविता दारुणो दशकन्धरः ।
दशाननो महाकायो विंशत्यक्षिभुजः शुभे ॥६२॥
नैकष्युवाच
भगवन्नीदृशः पुत्र ईप्सितो मे महाव्रत ।
आत्मवंशगुणैर्युक्तो महाबलपराक्रमः ॥६३॥
तच्छ्रुत्वा विश्रवा राजंस्तथास्त्विति तया सह ।
उवास च ततो जज्ञे रावणो लोकरावणः ॥६४॥
जातमात्रे ततस्तस्मिन् रुरुवुश्चाशिवाः शिवाः ।
क्रव्यादयश्चापसव्यानि मण्डलानि प्रचक्रमुः ॥६५॥
ववर्षु रुधिरं मेघा उल्काश्च न्यपतन् भुवि ।
मही चकम्पे न बभौ सूर्यो वायुर्ववौ खरः ॥६६॥
समुद्रः क्षोभमापन्नो ग्रहा युयुधिरे तथा ।
मुनिस्तस्याकरोन्नाम दशग्रीव इति प्रभुः ॥६७॥
पुनः सिषेवे सुश्रोणी तं मुनिं पुत्रकाम्यया ।
कुम्भकर्णस्ततो जात आवृण्वन् वपुषा दिशः ॥६८॥
ततो विभीषणो जातो धर्मात्मा पश्चिमः सुतः ।
तस्मिञ्जाते महासत्त्वे पुष्पवर्षं पपात ह ॥६९॥
नेदुर्दुन्दुभयो दिव्या प्रसन्नाश्च दिशो दश ।
अशरीरा तथा वाणी साधु साध्विति चाब्रवीत् ॥ ७० ॥
तौ तु तत्र महारण्ये ववृधाते महौजसौ ।
कुम्भकर्णदशग्रीवौ लोकसन्तापनौ सदा ॥७१॥
कुम्भकर्णो महाकायो महर्षीन् परितापयन् ।
ब्राह्मणांश्च सदाचारान् भक्षयन् विचचार ह ॥७२॥

---

६२ a : अतः सुतस्ते not found in G
नैकष्युवाच not found in A
६४ d : लोकवारणः A
६९ c : जाते not found in H

विभीषणस्तु धर्मात्मा नित्यं धर्मे व्यवस्थितः ।
एकदा धनदस्तत्र पितरं द्रष्टुमागतः ॥७३॥
दृष्ट्वा तं नैकषी प्राह रावणं तनयं वचः ।
दशग्रीव तथा यत्नं कुरुष्वामितविक्रम ॥७४॥
यथानेन तव भ्रात्रा कुबेरेण समो भवेः ।
तच्छ्रुत्वा वचनं मातुर्महासत्त्वो दशाननः ॥७५॥
अपारं संदधे क्रोधं प्रत्यजानाच्च राक्षसः ।
वैमनस्यं न मातस्ते कर्तव्यं तपसा तथा ॥७६॥
साधयामि यथा तस्माद् भवेयं सर्वथाऽधिकः ।
कोपेन तेन राजेन्द्र दशग्रीवः सहानुजः ॥७७॥
दुष्करं कर्म संकल्प्य तपसे निदधे मनः ।
गौतमाश्रममाश्रित्य तपस्तेपे सुदारुणम् ॥७८॥
दिव्यं वर्षसहस्राणि निराहारो दशाननः ।
पूर्णे वर्षसहस्रे तु शीर्षमग्नौ जुहाव ह ॥७९॥
एवं वर्षसहस्राणि नव तस्य व्यपागमन् ।
शिरांस्यपि नवैवास्य प्राविशन् जातवेदसम् ॥८०॥
दशमे तु ततः प्राप्ते सहस्रे दशमं शिरः ।
छेत्तुकामस्य सन्तुष्टो गतस्तत्र प्रजापतिः ॥८१॥
उवाच च दशग्रीव तुष्टोऽहं तव राक्षस ।
वरं वृणीहि यः प्रार्थ्यो वृथा न श्रममर्हसि ॥८२॥

---

७५a : समं (for तव) AF
७६–७६b : not found in G
७८b : विदधे C
७९c : पूर्ण° G
८१–८२ : not found in G

दशग्रीवस्ततः प्राह प्रणम्य कमलासनम् ।
प्राणिनां भयमत्युग्रं मरणादेव सर्वदा ॥८३॥
न च मृत्युसमोऽरातिरमरत्वं कुरुष्व मे ।
ब्रह्मोवाच वरो नैष सर्वथा ते भविष्यति ॥८४॥
अथ केनाप्युपायेनामरतुल्यो भव प्रभो ।
दशग्रीव उवाचाथ सर्वथा नामरो यदि ॥८५॥
भविष्यामि वरं देहि यो मया प्राथ्यंते विधे ।
नासुराणां सुराणां च सुपर्णयक्षरक्षसाम् ॥८६॥
वध्यः स्यां सर्वथा देव न चिन्ताऽन्येषु जन्तुषु ।
तृणभूता इमे सर्वे प्राणिनो मानुषादयः ॥८७॥
यदि तेषामबध्यत्वं वृणेऽहं त्वां प्रजापते ।
उपहास्यो भविष्यामि ततस्तं न वृणे वरम् ॥८८॥

ब्रह्मोवाच

भविष्यत्येतदेवं वै तव राक्षसपुंगव ।
यानि शीर्षाणि छिन्नानि हुतानि च हुताशने ।
तान्यक्षयानि छिन्नानि भविष्यन्ति पुनस्तथा ॥८९॥
यदा यदा च यद्रूपं मनसा राक्षसेच्छसि ।
तदा तत्प्राप्स्यसे रूपं वचनान्मम नान्यथा ॥९०॥
विभीषणमथोवाच तपस्यन्तं महत्तपः ।
वरं वृणीष्व धर्मात्मन् प्रीतोऽस्मि तपसा तव ॥९१॥

---

८३–८५b : not found in G
८५b : °अमरत्वं नो भवेत् A °अमरत्वं नो भव F
८७c : हि मे BCH ह्रीमे C
ब्रह्मोवाच not found in C
८९ab : ब्रह्मोवाच भविष्यत्येतदेवं तव राक्षस CGH
९०a : च not found in G

विभीषण उवाच

आपदाऽपि विहस्तस्य न धर्माच्च्यवतां मतिः ।
अशिक्षितं च मे भ्रातुर्ब्रह्मास्त्रं जगतां गुरो ।
एष एव वरो मह्यं धर्मः सर्वाश्रमेष्वपि ॥९२॥

ब्रह्मोवाच

धर्मिष्ठो हि महाभाग नाधर्मे च मतिस्तव ।
स्वत एव हि सिद्धोऽयं वरस्ते राक्षसोत्तम ॥९३॥
त्वदुक्तं सर्वमेवास्तु अमरत्वं ददामि ते ।
इत्युक्त्वा तं ततो ब्रह्मा कुम्भकर्णमुपागतः ॥९४॥
अतिघोरं तपस्यन्तं वरं दातुमुपस्थितः ।
ततः सुराः समागत्य वाक्यं प्राञ्जलयोऽब्रुवन् ॥९५॥
जानासि हि यथा लोकानुद्वेजयति राक्षसः ।
सप्त चाप्सरसः स्वर्गे भक्षयामास दुर्जयः ॥९६॥
भक्षिता बहवो ब्रह्मन्नृषयो मानवास्तथा ।
अतो निद्रावरश्चास्मै दीयतां कमलासन ॥९७॥
अन्यथा सहसा लोकानेष उच्चाटयिष्यति ।
इत्युक्तोऽचिन्तयद् ब्रह्मा जगाद च सरस्वतीम् ॥९८॥
वाणि त्वं राक्षसस्यास्य जिह्वामाविश्य भामिनि ।
यद् वदन्ति सुराः सर्वे तद् वचः प्रतिपादय ॥९९॥

---

९२b : धर्मान् न G
च्यवते AF
९२c : अपेक्षितं F
९३b : रतिस्तव C
९४b : ददानि GH
९४d : ततो गतः ACeFH
९७c : ततो D
९९a : बाले A
९९b : आश्रित्य A

इत्युक्त्वा सा प्रणम्याथ तं विवेश निशाचरम् ।
ततस्तमब्रवीद् ब्रह्मा वरं वरय राक्षस ॥१००॥
कुम्भकर्णस्ततो हृष्टो वरं वव्रे प्रजापतिम् ।
देव वर्षसहस्राणि वृणोमि स्वप्नमीप्सितम् ॥१०१॥
परं षण्मासतः काङ्क्षे दिनमेकं तु भोजनम् ।
एवमस्त्विति चोक्त्वाथ सह देवैः पितामहः ॥१०२॥
तथैवान्तर्दधे देवी मुमोच तं सरस्वती ।
गते ब्रह्मणि मुक्तोऽसौ सरस्वत्या निशाचरः ॥१०३॥
आत्मानं निन्दयामास स मुहुश्चान्वतप्यत ।
आत्मानमेव बहुशः श्वसन् निन्दन् पपात ह ॥१०४॥

इति श्रीपद्मपुराणे स्वर्गखण्डे रावणोत्पत्तिर्दशमोऽध्यायः ॥१०॥

---

१०१c : दैव° G
१०१d : ईरितम् AD
१०२d : प्रजापतिः C
१०३b : मुमुचे GH
पुष्पिका : इत्यादिमहापुराणे पाद्मे A
F adds नाम after रावणोत्पत्तिः
दशमोऽध्यायः not found in C

सुनन्द उवाच

सुमाली तानथ ज्ञात्वा देवाल्लब्धमनोरथान् ।
सहानुगो भयं त्यक्त्वा उदतिष्ठद् रसातलात् ॥१॥
अभिगम्य दशग्रीवं परिष्वज्याब्रवीद् वचः ।
दिष्ट्या ते तात सम्प्राप्तश्चिन्तितो मे मनोरथः ॥२॥
देवानां हि भयेनैव वयं प्राप्ता रसातलम् ।
इदानीं निर्भयं वत्स चरिष्यामो यतस्ततः ॥३॥
अस्मदीया हि लंकेयं नगरी राक्षसोषिता ।
निषेविता तव भ्रात्रा धनदेन महौजसा ॥४॥
येन केनाप्युपायेन साम्ना भेदेन वा बलात् ।
ग्रहीतुं तात शक्येत तदा ते पौरुषं भवेत् ॥५॥
त्वं च लंकेश्वरो भूत्वा पालयास्मान् महाबल ।
तमुवाच दशग्रीवो मातामहमिदं वचः ॥६॥
कुबेरो गुरुरस्माकं ज्येष्ठो भ्राता यथा पिता ।
प्रहस्तस्तु तदा वाक्यमुवाच दशकन्धरम् ॥७॥
वीर नार्हसि तद्वक्तुं सौभ्रात्रं प्राणिनां कुतः ।
अदितिश्च दितिश्चैव द्वे एते कश्यपस्य वै ॥८॥
भगिन्यौ च सधर्मिण्यौ शीलाचारसमन्विते ।
अदितेर्जनिता देवा दितेर्दैत्यास्तथा सुताः ॥९॥
तेषां वैरं महद्ध्यासीद् युद्धं देवासुरं यतः ।
तथा वैरं महाबाहो गरुडस्योरगैः सह ॥१०॥

---

४c : निवेशिता A
७b : ज्येष्ठं G
८d : कन्ये (for एते) D
१०c : यथा D

नैतदेको भवानद्य करिष्यति विपर्ययम् ।
देवैराचरितं पूर्वं गृहाणैतद् वचो मम ॥११॥
तच्छ्रुत्वा तु दशग्रीवो वाढमित्यब्रवीद् वचः ।
प्रेषयामास दौत्येन प्रहस्तं वाक्यकोविदम् ॥१२॥

रावण उवाच

प्रहस्त गच्छ तं वीर ब्रूहि त्वं वचनान्मम ।
इयं लंकापुरी पूर्वं राक्षसानां निवासभूः ॥१३॥
केनचिद् दैवयोगेन त्यक्तेयं राक्षसी पुरी ।
ते पुनः कालयोगेन स्वं निवासमभीप्सवः ॥१४॥
त्वं च वासमिहाकार्षीर्न तच्छोभनमित्युत ।
इत्यादिष्टो महाराज प्रहस्तो रावणेन तु ।
गत्वा वैश्रवणाभ्यासं तथा सर्वं न्यवेदयत् ॥१५॥

कुबेर उवाच

जानामि भ्रातरं तं च महाबलपराक्रमम् ।
वीरं दत्तवरं तेन ब्रह्मणा परमेष्ठिना ॥१६॥
पृच्छामि पितरं गत्वा स यद् वक्ति करोमि तत् ।
इत्युक्त्वा तु वैश्रवणो गत्वा पितरमब्रवीत् ॥१७॥
दशाननो बलादेव लंकामिच्छति दुर्जयः ।
किं करोमि पितस्त्वं तु मामाज्ञापय साम्प्रतम् ॥१८॥

विश्रवा उवाच

राक्षसोऽसौ महावीर्यो लब्धकामश्च वेधसः ।
मयापि वचनं प्रायो न पालयति मन्दधीः ॥१९॥

---

१३c : इदं G
१४b : राक्षसीं F
१५a : त्वं तु A
१८d : मामाज्ञाप्य C

यदि साम्ना न लंकां त्वं दशग्रीवाय दास्यसि ।
बलादपि महाभाग स ग्रहीष्यति दुर्मदः ॥२०॥
तस्मात् त्यजस्व पुत्र त्वं लंकां सर्वसुखप्रदाम् ।
कैलासं गच्छ सकलैः सगणैः सह साम्प्रतम् ॥२१॥
अलका नाम नगरी तव वासाय सा भवेत् ।
शम्भुना तव सौख्यं च तेन सोऽप्यनुमंस्यते ॥२२॥
पित्रैवमुक्तो धनदस्त्यक्त्वा लंकां पुरीं तदा ।
अलकावासमकरोद् दिक्पतिः परमार्थवित् ॥२३॥
तत्पूर्वतो महाराज कैलासो नाम पर्वतः ।
यत्रास्ते भगवाञ्छम्भुरैशानी सा पुरी स्मृता ॥२४॥
तस्यां वसन्ति सततं रुद्रभक्तास्तपोधनाः ।
कश्यपस्य सुता ये च एकादश महाबलाः ।
रुद्रास्तेऽपि महाराज तत्रैव निवसन्त्युत ॥२५॥
शिवस्यानुचरा ये च भैरवा भीमनादिनः ।
सेवन्ते तं महेशानमुमया सह संगतम् ॥२६॥
इत्युक्तास्ते महाराज पुर्योऽष्टौ सर्वसौख्यदाः ।
शृण्वन्ति ये च ते यान्ति ताः पुरीः क्रमशो नृप ॥२७॥
अतः परं प्रवक्ष्यामि तदूर्ध्वं निवसन्ति ये ।
तत ऊर्ध्वं चन्द्रलोकश्चन्द्रमा यत्र राजते ॥२८॥
चान्द्रायणव्रतं ये तु कुर्वन्ति श्रद्धयान्विताः ।
ते यान्ति तत्पदं राजन् सुखसम्भोगसाधनम् ॥२९॥
पीयूषवर्षिभिर्यस्य करैराप्यायते जगत् ।
बुधस्य यः पिता राजंश्चन्द्रवंशो यतः स्मृतः ॥३०॥

---

२१cd : स्वगणैःसकलैः A
२२c : सख्यं तु A
२७a : ते not found in A
२८c : ग्रत A
२९c : ये यान्ति G

भरत उवाच

अस्माकं वंशकर्ताऽयं देवोऽमृतमयः प्रभुः ।
कस्य पुत्रो महातेजास्तद् वदस्वाच्युतप्रिय ॥३१॥

सुनन्द उवाच

ब्रह्मणो मानसः पुत्रस्त्वत्रिर्नाम महातपाः ।
स्रष्टुकामः प्रजा वत्स तपस्तेपे सुदुश्चरम् ॥३२॥
त्रीणि वर्षसहस्राणि दिव्यानीतीह नः श्रुतम् ।
ऊर्ध्वमाचक्रमे तस्य रेतः सोमत्वमीयिवत् ॥३३॥
नेत्राभ्यां तस्य सुस्राव दशधा द्योतयद् दिशः ।
तं गर्भं ब्रह्मणाऽऽदिष्टा दश देव्यो दधुर्दिशः ॥३४॥
संगत्यैव महाराज नैव ताः समशक्नुवन् ।
यदा न धारणे शक्तास्तस्य गर्भस्य ता दिशः ।
ततस्ताभिः सहैवासौ निपपात वसुन्धराम् ॥३५॥
पतितं सोममालोक्य ब्रह्मा लोकपितामहः ।
रथमारोपयामास लोकानां हितकाम्यया ॥३६॥
स तेन रथमुख्येन सागरान्तां वसुन्धराम् ।
त्रिः सप्तकृत्वो द्रुहिणोऽकारयत् तं प्रदक्षिणम् ॥३७॥
तस्य यत्प्लावितं तेजः पृथिवीमन्वपद्यत ।
तेनौषध्यः समुद्भूता याभिः सन्धार्यते जगत् ॥३८॥
स लब्धतेजा भगवान् ब्रह्मणा वर्धितः स्वयम् ।
उपयेमे दक्षकन्याः सप्तविंशतिसंख्यकाः ॥३९॥
अश्विन्याद्या महाराज नापत्यं तास्वविन्दत ।
दक्षशापात् क्षयो नाम व्याधिरस्य महामते ॥४०॥

---

३३d : ईयिवान् G
३५d : ता दश D　तादृश: AB
३७d : तु B
३८a : तत् A

भरत उवाच

नापत्यं यदि सोमस्य सोमवंशः कुतोऽभवत् ।
तयैव कथितः साक्षाद् बुधः पुत्रोऽस्य धीमतः ॥४१॥

सुनन्द उवाच

यदाभिषिक्तो देवेन ब्रह्मणाऽसौ सुधाकरः ।
ओषधीनां द्विजानां च माहाराज्ये महाद्युतिः ॥४२॥
तदैव राजसूयं स चक्रे मतिमतां वरः ।
उद्दीप्तो राजसूयेन मनोहरवपुर्धरः ॥
आगताः सुरनारीः स मोहयामास तेजसा ॥४३॥
तद् दृष्ट्वा देवताः सर्वाः स्वां स्वामादाय भामिनीम् ।
प्रययुः स्पर्धया धीर तारां जग्राह चन्द्रमाः ॥४४॥
तयैव सह रेमेऽसौ दर्पवानवनीपते ।
बृहस्पतिस्तु तं प्राह देहि चन्द्र मम स्त्रियम् ॥४५॥
परदारान् कथं नाम सेवसे मुनिनन्दन ।
तस्य वाचं न शुश्राव सोमो गर्वसमन्वितः ॥४६॥
ततो युद्धमभूद् राजन् नाम देवासुरं पुरा ।
असुराश्चन्द्रपक्षीया देवाः पक्षा बृहस्पतेः ॥४७॥
तत्प्रजाक्षयमालक्ष्य ब्रह्मा विश्वसृजां पतिः ।
वारयामास तान्सर्वान् युद्धाल्लोकभयंकरात् ॥४८॥
चन्द्रमाह ततो ब्रह्मा त्यज तारां परस्त्रियम् ।
दक्षकन्या महाभाग गृहाण परमस्त्रियः ॥४९॥
ततस्तत्याज तारां स तां जग्राह बृहस्पतिः ।
ततः सा सुषुवे पुत्रं रूपेणाप्रतिमद्युतिम् ॥५०॥
गुरुर्ममेति तं प्राह चन्द्रस्त्वाह ममात्मजः ।
पप्रच्छुस्तां ततो देवास्तारां कस्यात्मजो ह्ययम् ॥५१॥

---

४४b : भाविनीं AFG
४५b--४६d : not found in C
५१a : तं not found in A

नोवाच लज्जया किञ्चित् तारा तां प्राह विश्वसृक्।
रहस्येव ततः तारा चन्द्रस्येत्याह भूपते।
बुधोऽभूच्चन्द्रतनयो यस्य पुत्रः पुरूरवाः ॥५२॥

भरत उवाच

कथं शप्तोऽथ दक्षेण जामाता श्वशुरेण ह।
तत्कथ्यतां महाभाग श्रोतुं कौतूहलं मम ॥५३॥

सुनन्द उवाच

अश्विन्याद्यास्तु दक्षस्य उपयेमे सुता विधुः।
रोहिण्यामेव सततं पक्वप्रेमा रराम ह ॥५४॥
दृष्ट्वा तदितरास्ताश्च तप्ताः पितरमब्रुवन्।
नास्माकं कामदस्तात जामाता तव रोहिणीम् ॥
रमयत्येव सततं तेन तप्ता वयं पितः ॥५५॥
तच्छ्रुत्वा चाप्रियं दक्षः सोममाह भजस्व भोः।
प्रेम्णा समेन सर्वास्त्वं दुहितॄर्मम मानद ॥५६॥
जगृहे तद्वचो नैव सोमः सप्रेम रोहिणीम्।
तथैव रमयामास श्रुत्वा दक्षश्चुकोप ह ॥५७॥
शशाप ते न भविता ह्यपत्यं मद्वचोऽतिग।
यक्ष्मणा च परिग्रस्तो भव त्वं क्षीणरेतकः ॥५८॥
अथ क्षयमिते तस्मिन् सर्वास्ताः सहिताः स्त्रियः।
पितरं शरणं प्राप्ताः क्षीयते नः पतिः पितः ॥५९॥
न वयं तेन वर्तामो विना सुखनिराकृताः।
उवाच दक्षस्ताः सर्वाः शापो मे नान्यथा भवेत् ॥६०॥

---

५३b : यामाता C
५३d : हि मे A
५४a : दक्षस्य not found in H
५४d : वद्धप्रेमा CF
५५d : यामाता BCGH
५८b : °वचोनिग: CD

मासमध्ये पक्षमेकं वर्धतां स क्रमेण वै ।
क्षयं क्रमेण प्राप्नोतु पक्षमेकं व्यवस्थया ॥६१॥
एवं शापं वरं चैव ददावस्मै व्यवस्थया ।
तथैव राजते व्योम्नि क्षयवृद्धी दधद् विधुः ॥६२॥
अत ऊर्ध्वं महाराज नाक्षत्रो लोक उच्यते ।
वसन्ति यत्र ता एव दक्षकन्या धृतश्रियः ॥६३॥
परिवाराश्च तासां ये तुल्यरूपाः सहस्रशः ।
नक्षत्रपूजाकाले च नक्षत्रव्रतचारिणः ॥
तारालोके ते वसन्ति नक्षत्रसदृशप्रभाः ॥६४॥
अत ऊर्ध्वं महाराज बुधस्य स्थानमुच्यते ।
उक्तस्तज्जन्मविस्तारो बुद्धिस्तु बुधलोकदा ॥६५॥
शुक्रलोकस्ततो राजन् द्योतते तस्य तेजसा ।
दानवानां च दैत्यानां गुरुरेष महाग्रहः ॥६६॥
पीत्वा वर्षसहस्रं वै कणधूमं सुदुःसहम् ।
यः प्राप्तवान् महाविद्यां मृतसंजीवनीं हरात् ॥६७॥
इमां विद्यां न जानाति देवाचार्योऽपि दुष्कराम् ।
ऋते मृत्युंजयात् स्कन्दात् पार्वत्या गजवक्त्रतः ॥६८॥
जातोऽसौ भार्गवे वंशे भार्गवस्तेन कथ्यते ।
वित्तं जहार राजेन्द्र धनदस्य स मायया ॥६९॥
ततः क्रुद्धो महादेवो हन्तुं तमुपचक्रमे ।
तद् वीक्ष्य भार्गवस्तस्योदरमेव विवेश ह ॥७०॥

---

६२ab : not found in A
६२b : ददौ तस्मै eH
६२c : अथैव A
६३a : तत (for अत) F
६३c : या एता एव A तत्र ता एव D
६५a : तत eH

तुष्टाव तत्र स्थित्वैव ततस्तुष्टो महेश्वरः ।
उवाच निर्गच्छ भृगो शिश्नद्वारेण दुर्मते ।।७१।।
निर्गतस्तेन मार्गेण ततः शुक्रत्वमागमत् ।
शुक्रं निरुध्य तप्यन्ते ये तपस्ते नराधिप ।
शुक्रलोकं समासाद्य तेनैव सह मोदते ।।७२।।
ततोऽङ्गारको लोको हि वसत्यत्र महीसुतः ।
उत्पत्तिं चास्य वक्ष्यामि भूसुतोऽयं यथाऽभवत् ।।७३।।
पुरा हि भ्रमतो विष्णोः स्वेदबिन्दुः पपात ह ।
मह्यां ततः कुमारोऽसौ लोहिताङ्गो महीतलात् ।।७४।।
जातः स्नेहेन मेदिन्या वर्धितः पृथिवीपते ।
तपसाराध्य ब्रह्माणं ग्रहत्वमुपसेदिवान् ।।७५।।
ततः बृहस्पतेः स्थानं देवाचार्यस्य भूपतेः ।
विधेर्विधित्सत. पूर्वं त्रिलोकी वचनं मुदा ।।७६।।
आविरासुः सुताः सप्त मानसाः स्वस्य सन्निभाः ।
मरीच्यत्र्यङ्गिरोमुख्याः सर्वे सृष्टिप्रवर्तकाः ।।७७।।
प्रजापतेरङ्गिरसो जातः प्राणसमः सुतः ।
शान्तो दान्तो जितक्रोधो मृदुवाङ्निर्मलाशयः ।।७८।।
वेदवेदार्थतत्त्वज्ञः कलासु कुशलोऽमलः ।
हितोपदेष्टा हितकृद् देवानां परमो गुरुः ।।७९।।
सर्वलक्षणसम्भावसम्भृतो गुरुवत्सलः ।
तस्मादूर्ध्वं महाराज स्थानं सौरेर्महात्मनः ।।८०।।

---

७२b : क्रुद्धत्वम् CeF
७३a : °ङ्गारलोको A
७३d : यथायं भूसुतोऽभवत् C
७४c : महान् C
७६d : °वचनान् CeG
७९a : वेदवेदाङ्ग° C

मरीचेः कश्यपो जज्ञे तस्माज्जज्ञे विभावसुः ।
तस्य भार्याऽभवत् संज्ञा पुत्री त्वष्टुः प्रजापतेः ॥८१॥
भर्तुरिष्टा ततः साऽभूद् रूपयौवनशालिनी ।
संज्ञा बभूव तपसा सुदीप्तेन समन्विता ॥८२॥
तेजस्त्वभ्यधिकं तस्य साऽसहिष्णुर्विवस्वतः ।
यतः स तापयामास त्रैलोक्यमुष्णरश्मिभृत् ॥८३॥
त्रीण्यपत्यानि राजेन्द्र संज्ञायां महसां निधिः ।
आदित्यो जनयामास कन्यां चैकां सुलोचनाम् ॥८४॥
वैवस्वतं मनुश्रेष्ठं यमं च यमुनां ततः ।
नातितेजोमयं रूपं सोढुं सालं विवस्वतः ॥८५॥
मायामयीं ततश्छायां सवर्णां निर्ममे स्वतः ।
प्राञ्जलिः प्रणता भूत्वा संज्ञां छाया तदाब्रवीत् ॥८६॥
तवाज्ञाकारिणीं देवि शाधि मां करवाणि किम् ।
संज्ञोवाच ततश्छायां सवर्णे शृणु मे वचः ॥८७॥
अहं यास्यामि सदनं पितुस्त्वं पुनरत्र मे ।
भवने वस कल्याणि निर्विशङ्कं ममाज्ञया ॥८८॥
मनुरेष यमावेतौ यमुनायमसंज्ञकौ ।
स्वापत्यदृष्ट्या द्रष्टव्यमेतद् बालत्रयं त्वया ॥८९॥
न वक्तव्यमिदं वृत्तं त्वया पत्यौ कदाचन ।
इत्याकर्ण्याथ सा त्वाष्ट्रीं देवी छाया जगाद ताम् ॥९०॥
आकचग्रहणान्नाहमाशापाच्च कदाचन ।
आख्यास्यामि चरित्रं ते याहि देवि यथासुखम् ॥९१॥

---

८१b : प्रभाकरः G
८२a : साभूत् E
८२c : महसा (for तपसा) F
८४b : महसानिधेः F महसां निधेः GH निधे e
८७b : साध्वि C
८७d : सावर्णे C
८९ : not found in G

इति छायां गृहे स्थाप्य संज्ञागात् पितुरालयम् ।
उवाच पितरं देवी जामातुस्तव न क्षमा ।
तेजः सोढुमहं तात कश्यपस्य महात्मनः ॥९२॥
तन्निशम्य चुकोपासौ भर्त्सयामास कन्यकाम् ।
भर्तुः समीपं याहीति तामुवाच पुनः पुनः ॥९३॥
चिन्तामवाप महतीं निनिन्दात्मानमात्मना ।
स्वातन्त्र्यं न क्वचित् स्त्रीणां धिगस्वातन्त्र्यजीवितम् ॥९४॥
शैशवे यौवने चान्ते पितृभर्तृसुताद् भयम् ।
त्यक्तं भर्तृगृहं मौढ्याद्धतदुर्वृत्तया मया ॥९५॥
अविज्ञाताऽपि चेद् यायामहं पत्युर्निकेतनम् ।
तत्रास्ति सा सवर्णा वै परिपूर्णमनोरथा ॥९६॥
अथावतिष्ठे चेदत्र पित्रा निर्भर्त्सिताप्यहो ।
ततोऽतिचण्डश्चण्डांशुः पित्रोरपि भयंकरः ॥९७॥
नष्टं भर्तृगृहं मौढ्याच्छ्रेयो वा न पितुर्गृहम् ।
वयश्च प्रथमं चारु रूपं त्रैलोक्यकाङ्क्षितम् ॥९८॥
सर्वाभिभरणं स्त्रीत्वं कुलं चातीवनिर्मलम् ।
पतिश्च तादृक् सर्वज्ञो लोकचक्षुस्तमोपहः ॥९९॥
सर्वेषां कर्मणां साक्षी सदा सर्वत्र संचरः ।
मह्यं श्रेयः कथं वा स्यादिति सा परिचिन्त्य च ॥१००॥
अगच्छद् वडवा भूत्वा चरन्ती चोत्तरान् कुरून् ।
तपस्तेपे च सा तीव्रं पतिमाधाय चेतसि ।
तपोबलेन तत्पत्युः सहिष्ये तेज इत्यलम् ॥१०१॥

---

९२d : यामातु CeH
९५cd: मौढ्यात् हत° e
१००a: कर्मणः AeF
१००c : स्यात् e
१०१f : इत्युत c

मन्यमानोऽथ तां संज्ञां सवर्णायां तथा रविः ।
सावर्णिं जनयामास मनुश्रेष्ठं महीपते ॥१०२॥
शनैश्चरं द्वितीयं च सुतां भद्रां तृतीयकाम् ।
सवर्णा स्वेष्वपत्येषु सापत्न्यात्स्त्रीस्वभावतः ॥१०३॥
चकाराभ्यधिकं स्नेहं न तथा पूर्वजेष्वहो ।
मनुस्तत्क्षान्तवान् ज्येष्ठो भक्ष्यालङ्कारलालने ॥१०४॥
कनिष्ठेष्वधिकं दृष्ट्वा सावर्ण्यादिषु नो यमः ।
कदाचिद् रोषवान् बाल्याद् भाविनोऽर्थस्य गौरवात् ॥१०५॥
यदा संतर्जयामास यमः संज्ञास्वरूपिणीम् ।
तं शशाप च सा क्रोधात् सावर्णेर्जननी तदा ॥१०६॥
जिघांसता तया पाप मां यदङ्घ्रिः समुद्यतः ।
अचिरात् तत् पतत्वेष तवेत्याह सुदुःखिता ॥१०७॥
मातृशापपरित्रस्तो यमोऽपि पितुरग्रतः ।
शशंस सर्वं तद् वृत्तं रक्ष रक्षेत्युवाच ह ॥१०८॥
मात्रा सुतेषु सर्वेषु वर्तनीयं समं यतः ।
अस्यां मयोद्यतः पादो न देहे परिपातितः ॥१०९॥
बाल्याद् वा यदि वा मोहात् तद् भवान् क्षन्तुमर्हति ।
मा तात शापतो मातुः पतत्वेष तु पादकः ॥११०॥

---

१०२b : तथावधिः A
१०३b : तृनीयिकाम् BCFGH
१०५c : बाल्यात् AC
१०६a : ताडयामास AF
१०७a : तात(for तया) C
पापे G
११०b : भवान् क्षन्तुं ममार्हति D
११०d : च G

विवस्वानुवाच

अपराधसहस्रेषु जननी न शपेत् सुतम् ।
तस्मात् किमपि भो बाल भविष्यत्यत्र कारणम् ॥१११॥

येन त्वां सा शपेत् क्रोधाद् धर्मज्ञं सत्यवादिनम् ।
मातृशापोऽन्यथा कर्तुं न शक्यः केनचित् क्वचित् ॥११२॥

कृमयो मांसमादाय यास्यन्त्यस्मान्महीतलम् ।
इत्थं तु चरितार्थः स्याच्छापस्त्रातो भवानपि ॥११३॥

इति पुत्रं समाश्वस्य रविरन्तःपुरं ययौ ।
चिरमालोक्य तां भार्यामुवाच सविता वचः ॥११४॥

अयि भाविनि बालेषु समेष्वपि कुतस्त्वया ।
विधीयतेऽधिकस्नेहः सावर्ण्यादिसुतान् प्रति ॥११५॥

नाचचक्षे तदा साऽथ भास्वते परिपृच्छते ।
तदात्मानं समाधाय सोऽज्ञासीत् सर्वमेव तत् ॥११६॥

ततः समुद्यते शप्तुं छाया सर्वं शशंस ह ।
यथावृत्तं तथा तथ्यं तुतोष भगवान् रविः ॥११७॥

निरागसं न शशाप जगाम त्वष्टुरन्तिकम् ।
त्वष्टापि च यथान्यायं सान्त्वयन् कश्यपात्मजम् ।
निर्दग्धुकामं कोपेन प्राणर्चच्च मुदा तदा ॥११८॥

त्वष्टोवाच

तवातितेजसो भीता प्राप्योत्तरकुरून् वने ।
वडवारूपमास्थाय संज्ञा चरति शाद्वले ॥११९॥

---

१११a : °सहस्रेऽपि BFGH
११२a : साशपत् CH
११३d : शापत्रातो G
११७a : हन्तुं H
११८d : सान्त्वयित्वाथ काश्यपं C

द्रष्टा हि तां भवानद्य सभार्यां वत्स मा रुषः ।
अधृष्यां सर्वभूतानां तेजसा नियमेन च ॥१२०॥
कुञ्जे मम भवान् कश्चित् कालं विश्रम्य गच्छतु ।
इति तं भ्रमिमारोप्य त्वष्टा किंचिद् विहस्य च ॥१२१॥
तेजस्ततक्ष देवस्य सोऽतिकान्ततरोऽभवत् ।
लब्धानुज्ञोऽथ सविता गत्वोत्तरकुरूनथ ॥१२२॥
साक्षात्तपोमयीं लक्ष्मीं चरन्तीं च तपो महत् ।
ददर्श वडवारूपां वह्विज्वालामिवोत्थिताम् ॥१२३॥
नीरसानि तृणान्येव गृह्णतीं योगमायया ।
निष्पापां तु तदा ज्ञात्वा तां त्वाष्ट्रीमश्वरूपिणीम् ॥१२४॥
स हरिर्हरिरूपेण मुखेन समताडयत् ।
त्वरमाणा च सवितुः परपूरुषशंकया ॥१२५॥
सा तु निरवमच्छुक्रं नासिकाभ्यां विवस्वतः ।
देवौ तस्मादजायेतामश्विनौ भिषजां वरौ ॥१२६॥
स्वरूपमनुरूपं च द्युमणिस्तामदर्शयत् ।
तुतोष साऽपि तं दृष्ट्वा पतिं परमरूपिणम् ॥१२७॥
अथ तां रूपिणीं त्वाष्ट्रीं प्रियां प्राप्य प्रियंवदः ।
स्वस्थानमगमत् पुत्रान् स्थाने स्थाने न्ययोजयत् ॥१२८॥
मनुं चक्रे महातेजाः सप्तमस्य पतिं सुतम् ।
मन्वन्तरस्य राजेन्द्र यमं संयमनीपतिम् ॥१२९॥

---

१२०b : तात(for वत्स)C
१२२b : भवेत् D
१२३a : त्रयीमयीं A
१२५a : स रविः A
१२५b : °तारयत् CH °भावयत् AF
१२६a : सा तन्नि° FH
१२७a : स्वं C
१२८ab : तां तु त्वाष्ट्रीं प्रियां भार्यामनुप्राप्य प्रियंवदः C

सावर्णिमष्टमस्यापि पतिं मन्वन्तरस्य वै ।
शनैश्चरं ग्रहं चक्रे ग्रहाणामुपरि स्थितम् ॥१३०॥
यमुनामाह भगवान् रविः प्रीतस्तु तद्गुणैः ।
तपश्चर महाभागे भगवांस्ते जनार्दनः ॥१३१॥
ग्रहीष्यति करं काले नदीरूपेण तिष्ठ च ।
भद्रा तु तपती नाम वव्रे संवरणं पतिम् ॥१३२॥
अश्विनौ त्रिदिवेशानां कृतवान् स चिकित्सकौ ।
एवं शनैश्चरो राजन् सूर्यपुत्रो महायशाः ॥१३३॥
तस्मिंल्लोके स लोकानां हितकृत् प्रायशो न हि ।
किं तु पूजाफलं सर्वं ददात्येव महाग्रहः ॥१३४॥
सप्तर्षिमण्डलं तस्माद् दृश्यते सर्वतोपरि ।
तत्र सप्तर्षयः सन्ति विनियुक्ताः प्रजासृजा ॥१३५॥
मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः ।
वसिष्ठश्च महाभागो ब्रह्मणो मानसाः सुताः ॥१३६॥
सप्त ब्रह्माण इत्येते उच्यन्ते ब्रह्मवादिभिः ।
संभूतिरनसूया च क्षमा प्रीतिश्च सन्नतिः ॥१३७॥
अरुन्धती तथा लज्जा तत्पत्न्यो लोकमातरः ।
एतासां तपसा चैतद् धार्यते भुवनत्रयम् ॥१३८॥
सन्ध्यात्रयमुपासीनाः सावित्रीजपतत्पराः ।
तस्मिंल्लोके वसन्त्येते ब्राह्मणा ब्रह्मवादिनः ॥१३९॥

इति श्रीपद्मपुराणे स्वर्गखण्डे एकादशोऽध्यायः ॥११॥

---

१३८a : अरुन्धतिस्तथा Ce FGH
चैव D
पुष्पिका: इत्यादिमहापुराणे पाद्मे AF

# १२

सुनन्द उवाच

स्वर्लोकादुपरि श्रेष्ठो ध्रुवलोकः सनातनः ।
ध्रुवो नाम महाराज राजा भुवनपावनः ॥१॥
वैष्णवानां वरो यस्तु सर्वैस्ताराग्रहैरपि ।
सप्तर्षिभिश्च राजेन्द्र तथान्यैर्ज्योतिषां गणैः ।
देवैरपि महाराज क्रियतेऽसौ प्रदक्षिणः ॥२॥

भरत उवाच

कस्मिन् कुले स देवेन्द्र जातः परमधार्मिकः ।
केन वा तपसा प्राप लोकमिन्द्रादिदुर्लभम् ॥३॥

सुनन्द उवाच

शृणु राजन् प्रवक्ष्यामि कथां पुण्यतमां तव ।
यं श्रुत्वैव नरः सद्यो याति विष्णोः स्वभक्तताम् ॥४॥
उत्तानपादनामासीन् मनोः स्वायंभुवस्य वै ।
तनयः सुनयः सर्वराजाचारसमन्वितः ॥५॥
द्वे चास्य भार्ये सुश्रोण्यौ सुनीतिः सुरुचिस्तथा ।
सुरुच्यामुत्तमो ज्येष्ठः सुतस्तस्य महात्मनः ॥६॥
सुनीत्यां तु ध्रुवो जज्ञे कनीयान् प्रगुणाधिकः ।
सुरुच्यां प्रेमवान् राजा सुनीत्यां नैव तादृशः ॥७॥

---

१–३ : not found in G
२c : तु (for च) A
४b : वर (for तव) C
४d : सभक्ततां C
६cd : उत्तमस्तस्य सुतो ज्येष्ठो C

एकदा तु महाराज सुरुच्या सह भूपतिः ।
प्रेम्णोत्तमं नाम सुतं लालयन् रुचिरासने ॥८॥
वसन्नासीत् प्रियापाङ्गतरङ्गेण जडीकृतः ।
तद् विलोक्य ध्रुवस्तातं राजसिंहासनाश्रितम् ॥९॥
आरोक्ष्यन्नङ्कमेतस्य शनैरुपजगाम ह ।
अर्धासनमथारूढं ध्रुवं दृष्ट्वा महीपतिः ॥१०॥
तातेहि वत्स पुत्रेति अभ्यनन्दत भूपते ।
तद् विलोक्य कटाक्षेण घ्नतीव प्रेक्ष्य भूपतिम् ॥११॥
उवाच निष्ठुरां वाचं स्तब्धे शृण्वति राजनि ।
वत्स ध्रुव किमारोढुमिच्छस्यङ्कं महीपतेः ॥१२॥
बाल बालिशया बुद्ध्या दुर्भगाजठरोद्भव ।
अस्मिन् सिंहासने वस्तुं न त्वया सुकृतं कृतम् ॥१३॥
यदि वाञ्छसि पुत्रत्वमेतन्नाम नृपासनम् ।
तपसा विष्णुमाराध्य सुकृतानि विधाय च ॥१४॥
मद्गर्भे साधयात्मानं वरसौभाग्यभाजने ।
पश्योत्तममिमं वत्स तवैव भ्रातरं नृपः ॥१५॥
स्वाङ्कमारोप्य सुस्निग्धः परमानन्दनिर्वृतः ।
एवमुक्तः स राजेन्द्र तया स परिभर्त्सितः ॥१६॥
पतन्नियम्य बाष्पाम्बु धैर्यात्किंचिन्न चोक्तवान् ।
राजापि किंचिन्नोवाच महिष्याः प्रेमयन्त्रितः ॥१७॥

---

११b : भूपतिः A
११d : सुरुचिः (for घ्नतीव) C
१३c : तस्मिन् G
१६c–१७d : not found in A
१६d : च (for स) F

ध्रुवः प्रणम्य पितरं शोकं संहृत्य चेष्टितैः ।
शैशवैरेव धर्मात्मा श्वसन्नन्तर्ययौ गृहम् ॥१८॥

सुनीतिस्तनयं प्रेक्ष्य विम्लानमुखपङ्कजम् ।
अङ्कमारोप्य कृपया ध्रुवं समवमानितम् ॥१९॥

अभिसृत्य च तं बालं मूर्ध्न्युपाघ्राय चासकृत् ।
किंचित्परिम्लानमुखी पुत्रं पप्रच्छ भूपते ॥२०॥

कथं वत्साद्य ते वक्त्रं परिम्लानमिवेक्षते ।
केन किं कृतमद्येह वद वत्स तवाप्रियम् ॥२१॥

इत्युक्तः स जनन्या वै रुरोद नृपबालकः ।
दीर्घं निःश्वस्य बहुशो वक्तुं किञ्चिच नाशकत् ॥२२॥

माताह वत्स मा रोदीर्वद विप्रियकारणम् ।
विद्यमाने नरपतौ वत्स केनावमानितः ॥२३॥

अपोऽथ समुपस्पृश्य प्रमृज्याश्रूणि नेत्रयोः ।
मात्रा पृष्टोऽपि निर्बन्धाद् ध्रुवस्तां प्रत्यभाषत ॥२४॥

संपृच्छे जननि त्वाहं कथय त्वं न वै मृषा ।
भार्यात्वेपि च सामान्ये कथं सा सुरुचिः प्रिया ॥२५॥

कथं न भवती मातः प्रिया क्षितिपतेरसि ।
कथमुत्तमतां प्राप्त उत्तमः सुरुचेः सुतः ॥२६॥

कुमारत्वेऽपि सामान्ये कथं वाहमनुत्तमः ।

---

१८c : एष A
१८d : अन्तर्गृहं ययौ A
२०a : अभिसृज्य F अभिमृज्य GH
२०d : भूपतेः B
२२d : किंचिन् न चाशकत् A
२४c : पिष्टोऽपि e
२६b : कथं (for प्रिया) A

सुकुक्षिः सुरुचिः कस्मान्मन्दभाग्यासि वा कथम् ।
कथं नृपासनार्होऽयमुत्तमो नाहमेव च ॥२७॥
उत्तमेन कृतं किं नो सुकृतं किं मया पुनः ।
दुष्कृतं वा कृतं राज्ञि तन्मे कथय सुव्रते ॥२८॥
इति श्रुत्वा वचस्तस्य सुनीतिः स्वसुतस्य वै ।
वक्तुं तमुपचक्राम त्यक्त्वा सापत्न्यभावितम् ॥२९॥

सुनीतिरुवाच

अयि तात महाबुद्धे विशुद्धेनान्तरात्मना ।
निवेदयामि ते सर्वं मावमाने मतिं कृथाः ॥३०॥
तया यदुक्तं तत्सर्वं तथ्यमेव न चान्यथा ।
सा हि राज्ञो महाराज्ञी महिषी चातिवल्लभा ॥३१॥
तया जन्मान्तरे तात यत्पुण्यं समुपार्जितम् ।
तत्पुण्योपचयाद् राजा सुरुच्यां प्रेमवान् भृशम् ॥३२॥
मादृश्यो मन्दभाग्यायाः प्रमदाः स्वप्रतिष्ठिताः ।
केवलं राजपत्नीत्ववादस्तासु न तत्प्रियाः ॥३३॥
सुकृतैरर्जितैः पूर्वमुत्तमश्चोत्तमोदरे ।
उवास तस्याः पुण्याया नृपसिंहासनोचितः ॥३४॥
चन्द्राभमातपत्रं च शुभे चापि च चामरे ।
भद्रासनं तथोच्चं च तुरङ्गाश्च मदोद्धुराः ॥
निःसापत्न्यं शुभं राज्यं सौभाग्यं सर्वसम्पदाम् ॥३५॥
सुकृतैरेव जायन्ते सिद्धिर्मानसिकी तथा ।
मानापमानयोस्तात सुकृतं कारणं परम् ॥३६॥

---

२८b : सुकृतं नु C
मया कृतं A
३३b : सप्रतिष्ठित: G
३४a : स्वसुतैः C
३५c : निःसपत्न्यं H

ध्रुव उवाच

मा बाल इति मामवमंस्थास्तपस्विनि ।
यद्यहं मानवे वंशे जातोऽस्म्यत्यन्तपावने ॥३७॥
उत्तानपादतनयस्त्वदीयोदरसंभवः ।
तप एव हि चेन्मातः कारणं सर्वसम्पदाम् ॥३८॥
ततोऽहं साधयिष्यामि पदमन्यैर्दुरासदम् ।
अनुज्ञां देहि मे मातराशीभिरभिनन्दय ॥३९॥
साभिज्ञाय कुमारं तं महावीर्यं स्वकुक्षिजम् ।
उवाच नाहं शक्तास्मि त्वामनुज्ञातुमात्मना ॥४०॥
क्व पञ्चवर्षबालोऽसि क्व तपोऽतिसुदुष्करम् ।
दुराराध्यो हि गोविन्दस्ततो बालक वारये ॥४१॥
त्वदेकतनया तात त्वदाधारैकजीविता ।
त्वमन्धदृष्टिरसि मे शरणं मे त्वमेव हि ॥४२॥
लब्धोऽसि कतिभिः कृच्छ्रैरिष्टा संप्रार्थ्य देवताः ।
स त्वं वत्स कथं याया मां विहाय सुदुःखिनीम् ॥४३॥

ध्रुव उवाच

नाहं जीवामि भो मातस्त्वत्सपत्न्या यदीरितम् ।
प्रविश्य तन्मे हृदयं शरवन् मर्म कृन्तति ॥४४॥
नावमानात्परं दुःखं क्षत्रियस्य विशेषतः ।
सोहमाराधयिष्यामि सर्वं दुःखहरं हरिम् ॥४५॥

सुनन्द उवाच

सा विमृष्य सुतस्याथ द्विधैव प्राणधारणम् ।
दुष्करं तत् तपस्येव शुभं प्राणवियोजनम् ॥४६॥

३८b : त्वदीये देवसम्भवः G त्वदीये देवि सम्भवः H
४०a अभिज्ञाय A
४४b : पत्न्या यदि जीवितम् C
४६c : सुदुष्करं तपस्येव C

अथोवाच ध्रुवं राज्ञी रुदती करुणं बहु ।
गच्छाराधय गोविन्दं तपसा परमेण हि ॥४७॥
कुशलाः सन्तु पन्थानो देवा रक्षन्तु सर्वथा ।
साधयाभीप्सितं वत्स त्वरयास्तु समागमः ॥४८॥
इत्यनुज्ञां स मातुर्वै लब्ध्वा राजकुमारकः ।
प्रतस्थे तपसेऽरण्यं हृदयेन विदूयता ॥४९॥
स्वसौधात् स विनिर्गत्य बालोऽबालपराक्रमः ।
अनुकूलेन मरुता दर्शिताध्वा महामनाः ॥५०॥
स मातृदैवतोऽभिज्ञः केवलं राजवर्त्मनि ।
न वेद काननाध्वानं क्षणं दध्यौ नृपात्मजः ।५१॥
अथाविरासीद् देवर्षिः पथि बालस्य गच्छतः ।
स उवाच ध्रुवं तात राजपुत्रोऽसि बालकः ॥५२॥
क्व गच्छसि किमर्थं ते विम्लानमुखपंकजम् ।
स दृष्टपूर्वं तं दृष्ट्वा नारदं मुनिपुंगवम् ॥५३॥
प्रणम्य श्लक्ष्णया वाचा जगाद मधुरं शिशुः ।
देवर्षे तपसा विष्णुमाराध्य जगतां पतिम् ॥
पदं त्रिभुवनोत्कृष्टमारोढुं साधयाम्यहम् ॥५४॥

**नारद उवाच**

तात बालोऽसि ते प्रज्ञा नैषा साध्वी सुदुश्चरम् ।
तपः साधयितुं योग्या काले प्राप्ते हि तप्स्यसि ॥५५॥

---

४७d : परमं हि च C
४८b : सर्वदा A
४८d : त्वया ह्यस्तु D
४९c : तपसा C
५०d : महामते C
५२d : बालक A
५५a : ततो C
५५d : तपस्यसि G तप्स्यति H

यमाराधयितुं तात वाञ्छसि त्वं जगद्गुरुम् ।
मुनीन्द्रैरपि संसिद्धैर्द्रष्टुं नैव स शक्यते ॥
निवर्तस्वाधुना बाल निर्बन्धाद् भृशदारुणात् ॥५६॥

ध्रुव उवाच

भवताऽभिहितं ब्रह्मन् हितमेव हि मादृशाम् ।
न मे हृदि प्रवेष्टुं हि शक्नोति भृशदुःखिते ॥५७॥
मातुः सपत्न्या वाग्बाणैर्विभिन्नं हृदयं मम ।
न ते मधुरया वाचा सुस्थं भवितुमर्हति ॥५८॥
अथ येनाऽभ्युपायेन मम सिद्धेन्मनोरथः ।
तं वदस्व महाभाग येन तुष्येद्धरिर्मयि ॥५९॥
नारदस्तस्य निर्बन्धं विदित्वा दृढनिश्चयम् ।
ज्ञात्वा चास्य प्रभावं वै जगादास्य हितं वचः ॥६०॥
अदवीयः पदं तस्य सर्वासां सम्पदामिह ।
कमलाकान्तचरणं ध्यायते यः स्वया धिया ॥६१॥
यस्य स्मरणमात्रेण महापातकसन्ततिः ।
क्षयमाप्नोति सहसा स विष्णुः सर्वतोऽधिकः ॥६२॥
यदाहुः परमं ब्रह्म प्रधानपुरुषात्परम् ।
यन्मायया ततं सर्वं स ते दास्यति काङ्क्षितम् ॥६३॥
यो यज्ञपुरुषो विष्णुर्वेदवेद्यो जनार्दनः ।
अन्तरात्मास्य जगतः स तुष्टः किं न यच्छति ॥६४॥
यद्भ्रूनर्तनमात्रेण सृष्टिस्थितिलया नृषु ।
तमाराध्य हृषीकेशमपवर्गोऽप्यदूरतः ॥६५॥

---

५६f : निर्बन्धात् D
५७c : प्रविष्टं G
६५b : °लयान् ऊचुः A

ध्रुव उवाच

कथं स भगवानिज्यः स विधिश्चोपदिश्यताम् ।
येन मे काङ्क्षितं सिद्ध्येत् स च तुष्येज्जनार्दनः ।।६६।।

नारद उवाच

तिष्ठता गच्छता वापि स्वपता जाग्रता तथा ।
शयानेनोपविष्टेन जप्यो नारायणः सदा ।।६७।।

द्वादशाक्षरमन्त्रेण वासुदेवात्मकेन च ।
ध्यायंश्चतुर्भुजं विष्णुं जप्त्वा सिद्धिं गमिष्यसि ।।६८।।

प्रफुल्लेन्दीवरश्यामं पीतवाससमच्युतम् ।
चिन्तयस्व हृषीकेशं हृदये कमलेक्षणम् ।।६९।।

गच्छ तात महाबुद्धे वनं मधुवनं शुचि ।
तत्र जप्त्वा मन्त्रमेतं हृदि चिन्तय केशवम् ।।७०।।

ॐ नमो भगवते वासुदेवायेति सर्वदा ।
वासुदेवं जपन् मर्त्यः सर्वं प्राप्नोत्यशंसयम् ।।७१।।

वासुदेवजपासक्तानपि पापकृतो नरान्
नोपस्पृशन्ति वै विघ्ना यमदूताश्च दारुणाः ।।७२।।

पितामहेन त्वय्येष महामन्त्र उपासितः ।
मनुना राज्यकामेन वैष्णवेन महर्द्धिना ।।७३।।

त्वमप्येतेन मन्त्रेण वासुदेवपरो भव ।
यथाभिलषितां सिद्धिं क्षिप्रमाप्नुहि सत्तम ।।७४।।

---

६६a : नु D
७१b : च (for इति) Ae
७1c : जपेन् D
७२c : विघ्नाय A
७३a : तेऽप्येष FH
७४d : विप्रम् B

इत्युक्त्वा नारदस्तं तु राजानं द्रष्टुमाययौ ।
तं विलोक्यागतं राजा देवर्षिं सुरपूजितम् ॥
पूजयामास पाद्याद्यैर्मुखेन परिशुष्यता ॥७५॥
नारदस्त्वाह राजानं राजन् कमनुशोचसि ।
नातिप्रसन्नं हृदयं लक्षये मनुपुत्रक ॥७६॥

उत्तानपाद उवाच

मयावमानितो बालो ध्रुवो नाम महामतिः ।
अङ्कारोहणमन्विच्छन् स्त्रैणेनाकरुणात्मना ॥७७॥
स चापि मदवज्ञानाच्छुतं पौरमुखान्मम ।
निर्गम्य नगराद् यातः पञ्चवर्षो महावनम् ॥७८॥
किं करोति वने बालो दुष्टसत्त्वनिषेविते ।
क्षुच्छ्रान्तः क्व च केनापि श्वापदैः किं स भक्ष्यते ॥७९॥

नारद उवाच

मा मा शुचः स्वतनयं महाभागवतं नृप ।
स स्वल्पेनैव कालेन साधयिष्यति दुष्करम् ॥८०॥
तव वंशप्रदीपोऽसौ महात्मा सुमहाञ्छुचि ।
पदं त्रिभुवनोत्कृष्टं तेजसा साधयिष्यति ॥८१॥
अप्यायास्यति कालेन स्वल्पेनैव महीपते ।
देवगुप्तं महात्मानं कस्तं व्यापादयिष्यति ॥८२॥
को विघ्नस्तस्य राजेन्द्र य आश्रयति केशवम् ।
इत्युक्त्वान्तर्दधे राजन्नारदो देवदर्शनः ।
ध्यायन् बालं स राजर्षिरास्ते स्म हृदि दुःखितः ॥८३॥
इति श्रीपद्मपुराणे स्वर्गखण्डे ध्रुवचरिते द्वादशोऽध्यायः ॥१२॥

---

७९b : °निवेशिते D
७९d : नु eF नो A
८१b : सुमहान् A B
पुष्पिका : इत्यादिमहापुराणे पाद्मे A

## १३

सुनन्द उवाच

औत्तानपादिरागत्य रम्यं मधुवनं नृप ।
यमुनायास्तटे रम्ये हरेश्चरणचिह्निते ॥१॥
पापो हि जन्तुस्तत् प्राप्य निष्पापो जायते ध्रुवम् ।
तत्र स्नात्वा तथाचम्य द्वादशाक्षरविद्यया ॥२॥
वासुदेवं हृदा ध्यायन् तप्यते स्म परं तपः ।
फलमूलाशनस्त्वाद्ये द्वितीये पत्रभोजनः ॥३॥
तृतीये जलमात्राशी चतुर्थे शिशिराशनः ।
पञ्चमे वायुभक्ष्योऽसौ तपस्तेपे सुदारुणम् ॥४॥
षष्ठे मासि ततः प्राप्ते वायुरोधं विधाय सः ।
तस्थावेकेन पादेन स्पृष्ट्वा भुवमनन्यधीः ॥५॥
अकुर्वन् देवता विघ्नं तस्य तच्चरतस्तपः ।
अभ्येत्याप्सरसस्तस्य पुरतो ननृतुस्तदा ॥६॥
कामोऽपि धनुषा बाणान् मुक्त्वा पुष्पमयान् बहून् ।
तस्य चालयितुं चेतः समाधेर्नाशकन् नृप ॥७॥
प्रत्यावृत्य ततो देवान् कामाद्यास्ते व्यजिज्ञपन् ।
बालोऽसौ यौवने शूरो वयं किं करवामहे ॥८॥
ततो देवाः परामृष्य सिंहव्याघ्रादिरूपिणः ।
विभीषिकां दर्शयन्तो वनं तत् समुपागमन् ॥९॥
कश्चिद् भल्लूकरूपेण दुर्दर्शदशनावलिः ।
अभ्यधावत वेगेन व्यापादयितुमर्भकम् ॥१०॥

---

२a : जन्तुर्यत् A
६c : आगत्या° **A**
७b : युक्त्वा GH

तं व्याघ्ररूपधृक् कश्चिद् व्यादाय विकटाननम् ।
द्विपोच्चदेहसंस्थानो मुहुर्गर्जन् समभ्ययात् ॥११॥
वराहमांसकं भुञ्जन् कश्चिद् विकटदंष्ट्रकः ।
अतिलोलद्विरसन आससाद तमर्भकम् ॥१२॥
रोषात्तमभिदुद्राव दृष्ट्वा संतर्जयन् भृशम् ।
तीक्ष्णाभ्यां च विषाणाभ्यां तटानुच्चान् विदारयन् ॥१३॥
कश्चिन्महिषरूपेण तमागत्य जगर्ज ह ।
कश्चिच्च पन्नगो भूत्वा फणाटोपभयानकः ।
अतिलोलद्विरसन आससाद तमर्भकम् ॥१४॥
कश्चिद् दावानलालीढखर्जूरद्रुमसन्निभम् ।
बिभ्रदूरुद्वयं प्रेताकारस्तं समुपागमत् ॥१५॥
चिकुरैर्मेघसंघर्षं कुर्वन् दीर्घकृशोदरः ।
निमग्नपिङ्गनयनः कश्चिद् भीषयति स्म तम् ॥१६॥
कृपाणपाणिर्भग्नास्यो वामहस्तकपालभृत् ।
क्ष्वेडां प्रचण्डां कुर्वन् वै अभ्यधावत्तमर्भकम् ॥१७॥
विशालं शालमादाय कुर्वन् किलकिलारवम् ।
कश्चित्तमभितो याति कृतान्त इव भीषणः ॥१८॥
उलूकाकारतां बिभ्रत् फूत्कारैरतिदारुणैः ।
हृदयाकम्पनैः कश्चिद् भीषयामास तं ध्रुवम् ॥१९॥
यक्षिणी काचिदानीय रुदन्तं कस्यचिच्छिशुम् ।
अपिबद् रुधिरं कोष्ठाच्चखादास्थि मृणालवत् ॥२०॥

---

११d : गर्जनमभ्ययात् eF
१२b : द्विरददंष्ट्रकः H
१२cd : not found in CeFGH
१४ b: फटाटोप° C
१६ d: यम् C
१७ c: क्षेडां Ce

पिपासिताद्य रुधिरं तव पास्याम्यहं ध्रुव ।
यथास्य बालस्य तथा चर्वित्वाऽस्थीत्युवाच ह ॥२१॥
आनीय तृणदारूणि विक्षिप्य च समन्ततः ।
दावाग्निं ज्वालयामास काचिद् वात्याविवर्धितम् ॥२२॥
वेतालीरूपमास्थाय भङ्क्त्वा काचित् तरून् गिरीन् ।
ररोद गगनाध्वानं कम्पयन्तीव तं भृशम् ॥२३॥
अन्या सुनीतिरूपेण तमभिप्रेक्ष्य दूरतः ।
ररोदातीव दुःखार्ता वक्षोघातं मुहुर्मुहुः ॥२४॥
उवाच च वचश्चाटु बहुमायाविनिर्मितम् ।
कारुण्यपूर्णं वात्सल्यमतीवातन्वती सती ॥२५॥
यदा प्रभृति रे बाल निरगात् तपसे भवान् ।
तदेव दिनमारभ्य निर्गताऽहं स्वमन्दिरात् ॥२६॥
प्रतिग्रामं प्रतिपुरं प्रत्यध्वं प्रतिकाननम् ।
प्रत्याश्रमं प्रतिगिरिमन्विष्यान्विष्य चागता ॥२७॥
तैस्तैः सपत्नीवाक्योक्तैर्दूनोषि त्वं यथार्भक ।
तथाहमपि दूनास्मि नितरां तद्वचोऽग्निना ॥२८॥
न निद्रामि न जागर्मि नाश्नामि न पिबाम्यहम् ।
ध्यायामि केवलं त्वाहं योगिनीव वियोगिनी ॥२९॥
अथोत्तानपदः कश्चिद् रूपमाधाय निर्जरः ।
तमाह बालकं गत्वा तपस्वीव वने भ्रमन् ॥३०॥
त्यज वत्स तपःश्रान्तिं संगृहाण नृपासनम् ।
उत्तमेन सहैवाहं प्रव्रज्याधर्ममाश्रये ॥३१॥

---

२३ b: मुक्त्वा A
कापि C
२९a : च जागर्मि G
२९b : न चाश्नामि A
३०b : आस्थाय A

अङ्कारोहं ममाप्राप्य भवान् यावत्समागतः ।
तावदेव मया वत्स परित्यक्तं नृपासनम् ॥३२॥
सुरुचिश्च परित्यक्ता भार्या निष्ठुरभाषिणी ।
निद्रादरिद्रनयनः स्वप्नेऽपि न तवाननम् ।
आनन्दि सर्वदा यन्मे मन्दभाग्यो विलोकये ॥३३॥
त्वदाननप्रतिनिधिं विधुं विधुरमानसः ।
नालोकयामि सन्तापान्न सेवे कोकिलध्वनिम् ॥३४॥
उत्तिष्ठ वत्स तपसो ममाङ्कमत्यलंकुरु ।
उष्य राजासने रम्ये पालयस्व वसुन्धराम् ॥३५॥
इत्थं विघ्नान्यनेकानि ससृजुः सर्वतः सुराः ।
ध्रुवो नालोकयामास निमील्य नयने स्थितः ॥३६॥
व्याघ्रादिरूपा ये चासन् श्वापदा ये यथार्थतः ।
ददृशुस्ते स्फुरज्ज्वालं विष्णुचक्रं सुदर्शनम् ॥३७॥
ज्वालामालाकुलं तीव्रं रक्षन्तं परितो ध्रुवम् ।
अति निष्कम्पहृदयं गोविन्दार्पितमानसम् ॥३८॥
तपोद्रुममिवोद्भिन्नं महीं निर्भिद्य दुर्जरम् ।
ते पावकं तथाभूतं दृष्ट्वा विघ्नकराः सुराः ॥३९॥
नमस्कृत्य यथायातं याता भग्नमनोरथाः ।
अतः सर्वे महेन्द्रेण सह भीता दिवौकसः ॥४०॥
संमन्त्र्य त्वरिता जग्मुर्ब्रह्माणं शरणं नृप ।
नत्वा विज्ञापयामासुर्ध्रुवस्य सुमहत्तपः ॥४१॥

देवा ऊचुः

धातरुत्तानपादस्य तनयेन महात्मना ।
तपसा तापिताः सर्वे दिवि स्थातुं न शक्नुमः ॥४२॥

---

३३a : तु (for च) A
३३d : तदाननम् AF
४१a : याता A
४१c : विज्ञापयामासु : B

८

अङ्गुष्ठेनैव बालस्य पीडितेयं वसुन्धरा ।
तरीव करिणाक्रान्ता मग्नोन्मग्ना पदे पदे ॥४३॥
इति विज्ञापितो देवैर्विहस्य चतुराननः ।
प्रत्युवाच न भीः कार्या ध्रुवतस्त्रिदिवौकसः ॥४४॥
व्रजन्तु विज्वराः सर्वे न स वः पदमिच्छति ।
तत्पदं लप्स्यते बालो यदन्यैरनधिष्ठितम् ॥४५॥
न तस्माद् भगवद्भक्ताद् भेतव्यं केनचित् क्वचित् ।
निश्चितं विष्णुभक्ता ये ते न स्युः परतापिनः ॥४६॥
आराध्य विष्णुं देवेशं लब्ध्वा तस्मात् स काङ्क्षितम् ।
भवतामपि सर्वेषां पदानि स्थिरयिष्यति ॥४७॥
एवमुक्ताः सुराः सर्वे ब्रह्मणा परमेष्ठिना ।
प्रणिपत्य ययुः स्वानि धिष्ण्यानि प्रमुदान्विताः ॥४८॥
अथ पक्षीन्द्रमारुह्य भगवानम्बुजेक्षणः ।
मयाऽपि सहितः साक्षात् तं बालं द्रष्टुमागमत् ॥४९॥
स मीलिताक्षः साक्षात् तं वर्तमानमपि प्रभुम् ।
नालोकयन् महाबाहो हृदि चिन्तापरो ध्रुवः ॥५०॥
तद् विज्ञाय महाराज भगवान् यद्धृदि स्थितम् ।
तदन्तर्धापयामास रूपं बालस्य पश्यतः ॥५१॥
तस्मिन्नन्तर्हिते रूपे व्यग्रचित्तो नृपार्भकः ।
अधनो हि धनं प्राप्य नष्टे तस्मिन् धने यथा ॥५२॥
उन्मील्य नयने भीतो रूपं तत् क्वेति चिन्तयन् ।
इन्द्रनीलमणिज्योतिःपटलीं स व्यलोकयत् ॥५३॥

---

४५a : निर्जरा : C
४८d : धिष्ट्यानि DFGH धिष्ट्यानि C धिष्ठ्यानि B
५०a : संमीलिताक्षः A
५१b : तद्° CeFGH

नीलोत्पलदलश्यामं प्रफुल्लकमलेक्षणम् ।
पीतेन वाससा युक्तं स ददर्श हरिं तदा ॥५४॥
दण्डवत् प्रणिपत्याथ परितः परिलुण्ठ्य च ।
रुरोद दृष्ट्वैव चिरं बालकः पितरं यथा ॥५५॥
तथा तं प्रणतं दृष्ट्वा पुण्डरीकविलोचनः ।
ध्रुवमुत्थापयामास रुदन्तं पाणिना हरिः ॥५६॥
स्पर्शनाद् देवदेवस्य सुसंस्कृतमयी शुभा ।
वाणी प्रवृत्ता तस्यास्यात् तुष्टावाथ ध्रुवो हरिम् ॥५७॥

ध्रुव उवाच

नमो नमस्ते भगवन् सर्वसृष्टिविधायिने ।
नमः पालनरूपाय विष्णवे प्रभविष्णवे ॥५८॥
नमो हरस्वरूपाय भूतसंहारकारिणे ।
महाभूतात्मभूताय भूतानां पतये नमः ॥५९॥
तृष्णाहराय तृष्णाय महाभारसहिष्णवे ।
नमो दैत्यमहारण्यदाववह्निस्वरूपिणे ॥६०॥
नमः कौमोदकीव्यग्रकराग्राय गदाधर ।
नमः श्रीपतये तुभ्यं रूपिणे परमात्मने ॥६१॥
नमः श्रीपतये तुभ्यं नमः कौस्तुभवक्षसे ।
नमो गुणस्वरूपाय गुणिने गुणवर्जिते ॥६२॥
वासुदेव नमस्तुभ्यं शङ्खचक्रधराय च ।
प्रद्युम्नायानिरुद्धाय नमः संकर्षणाय च ॥६३॥

---

५६a : वीक्ष्य (for दृष्ट्वा) CeGH
५६b : पुण्डरीकनिभेक्षणं C
५९-६०b : not found in G
६०c : नाना° H
६१cd : repeated in A

दामोदर हृषीकेश वैकुण्ठाच्युत वामन ।
उपेन्द्र कैटभाराते नारायण नमोऽस्तु ते ॥६४॥
अनन्ताय नमस्तुभ्यं नमस्ते शेषशायिने ।
जयाय जयरूपाय रणाङ्गनविचक्षण ॥६५॥
क्षणादिकालरूपाय कालकाष्ठात्मने नमः ।
नमस्ते धर्मरूपाय पुरुषाय पराय च ॥६६॥
नमः सहस्रशिरसे नमः सत्त्वगुणाय च ।
वेदाय वेदविदुषे वेदान्तपारगामिने ॥६७॥
विष्टरश्रवसे तुभ्यं नमो गरुडगामिने ।
त्रिविक्रमाय सत्याय मायिने ब्रह्मगामिने ॥६८॥
तपोरूपाय तपसां नमः सत्यप्रियाय च ।
नमस्ते स्मृतिरूपाय स्मृत्याचारप्रियाय च ॥६९॥
जरायुजस्वरूपाय स्वेदजाय नमो नमः ।
अण्डजाय नमस्तुभ्यं नम उद्भिज्जरूपिणे ॥७०॥
देवानामिन्द्ररूपोऽसि ग्रहाणामसि भानुमान् ।
सुरापगासि सरितां धेनूनां कामधुग् भवान् ॥७१॥
सत्यलोकोऽसि लोकानां सरसां मानसं सरः ।
हिमालयो गिरीणां त्वमब्धीनां क्षीरसागरः ॥७२
नीलोत्पलं प्रसूनेषु स्फटिकश्चोपलेष्वपि ।
काञ्चनं चापि धातूनां वृक्षेषु तुलसी भवान् ॥७३॥
शिलानामपि सर्वासां शालग्रामशिला भवान् ।
मुक्तिक्षेत्रेषु काशी त्वं प्रयागस्तीर्थपंक्तिषु ॥७४॥

---

६६b : कला° F
६७ab : not found in C
६८c : सत्वाय A
६९cd : repeated in C
६९d : °आधार° A

वेदेषूपनिषद्रूपो वर्णानां ब्राह्मणो भवान् ।
अक्षराणामकारस्त्वं व्यवहारे च वाग् भवान् ॥७५॥
यज्वनां सोमरूपोऽसि पवित्राणां पयो ह्यसि ।
अण्डजेषु वैनतेयो मन्त्राणां प्रणवो ह्यसि ॥७६॥
प्रतापिनामग्निरसि वातो वेगवतां भवान् ।
दातॄणामपि पर्जन्यः क्षमा चासि क्षमावताम् ॥७७॥
चापोऽसि सर्वशस्त्राणां परमात्मासि चात्मनाम् ।
क्रतूनामश्वमेधोऽसि दानानामभयो भवान् ॥७८॥
युगानां प्रथमोऽसि त्वं संक्रान्तिः सर्वपर्वसु ।
लाभानां पुत्रलाभोऽसि तिथीनां च कुहूर्भवान् ॥७९॥
योगेषु व्यतिपातस्त्वमृतूनां सुरभिर्भवान् ।
पुष्यो नक्षत्रवर्गाणां कुशस्त्वं तृणजातिषु ॥८०॥
मित्राणां हि कलत्रं त्वं धर्मस्त्वं सर्वबन्धुषु ।
त्वत्तो नान्यज्जगत्यस्मिन् नारायण चराचरे ।
माता त्वं च पिता त्वं च त्वं सुहृत् त्वं महाधनम् ॥८१॥
त्वमेव सौख्यं संपत्तिस्त्वमायुर्जीवनं तथा ।
तत् कर्म यत् त्वदर्थं वै तन्मनो यत् त्वदर्पितम् ॥८२॥
सा कथा यत्र ते नाम तपो यत् तद् भवत्स्मृतिः ।
तद् धनं धनिनां नाथ यत् त्वदर्थं हि दीयते ॥८३॥

---

७६c : गरुत्मांस्त्वं (for वैनतेयो) G
७६cd : not found in C
७७c : असि BGH
७७d : चापि A
८०cd : placed after ७८d in A
८१ab : not found in A
८२b : बलं (for तथा) G
८३c : धनं तत् G

तावच्च जीवितं श्रेयो यावत् त्वं हृदि वर्तसे ।
एवं स्तुत्वा महाराज विरराम नृपार्भकः ॥८४॥
तमुवाच हरिस्तुष्टो वचः परममर्थवत् ।
ज्ञात्वाहं तव हार्दं वै निर्मितं च पदं तव ॥८५॥
सर्वेषां ग्रहनक्षत्रज्योतिषामूर्ध्वमेव हि ।
प्रदक्षिणं करिष्यन्ति त्वां तु सप्तर्षयोऽमलाः ॥८६॥
ज्योतिश्चक्रस्य सर्वस्य ग्रहर्क्षादेः समन्ततः ।
गगने भ्रमतो नित्यं त्वमाधारो भविष्यसि ॥८७॥
मेधीभूतस्तु वै सर्वान् वायुपाशनियन्त्रितान् ।
आकल्पं तत्पदे तिष्ठन् भ्रामयन् ज्योतिषां गणान् ॥८८॥
कल्पावसाने मय्येव साम्यमाप्स्यसि पुत्रक ।
इति ते परलोकस्य मतिः संदर्शिता मया ॥८९॥
षट्त्रिंशद्वर्षसाहस्रमिह राज्यं करिष्यसि ।
त्वद्भ्रातर्युत्तमे नष्टे यक्षैर्वनविहारिणि ॥९०॥
अन्वेषयन्ती सुरुचिर्दावाग्निं सा प्रवेक्ष्यति ।
अन्ते ममैव दूतोऽयं सुनन्दः सहितोऽमरैः ॥९१॥
कामगेन विमानेन तं लोकं प्रापयिष्यति ।
इति दत्त्वा वरं तस्मै भगवान् सात्त्वतां पतिः ॥९२॥
पश्यतस्तस्य बालस्य तत्रैवान्तरधीयत ।
ध्रुवस्तु दुर्लभं लब्ध्वा शक्रादीनां च तत् पदम् ॥९३॥
निवृत्तात्मा पुरं प्रायात् प्रसन्नवदनाम्बुजः ।
तमागतं सुतं श्रुत्वा मनुपुत्रो महामनाः ॥९४॥
वृत्ताहर्त्रे ददौ प्रीत्या मदमत्तं मतङ्गजम् ।
चकार मङ्गलं सर्वं पुरं तच्चन्दनादिभिः ॥९५॥

---

९१b : संप्रवेक्ष्यति A

सवृन्तैः कदलीस्तम्भैः पूगपोतैरलंकृतम् ।
उद्यानेषु तडागेषु चकार च महोत्सवम् ॥९६॥
सुनीतिः स्वसुतं श्रुत्वा वनादागतमच्युतम् ।
यानमारुह्य सुश्रोणी माता प्रत्युद्ययौ सुतम् ॥९७॥
राजापि करिणीं कृत्वा सज्जितां विविधांशुकैः ।
प्रत्युद्ययौ सुतं द्रष्टुमुत्तमेन समन्वितः ॥९८॥
वीक्ष्य पुत्रं पुरप्रान्ते सुसिद्धार्थं समागतम् ।
आनन्दाश्रुजलैः सिक्तगात्रस्तं परिषस्वजे ॥९९॥
सुनीतिस्तनयं प्राप्य मृतं पुनरिवागतम् ।
नेत्राश्रुभिः प्रसिञ्चन्ती परिष्वज्यापसंमदम् ॥१००॥
सुरुचिस्तं परिष्वज्य स्मरन्ती स्वाघमुन्मनाः ।
परिरेभे मुकुन्दाङ्घ्रिदर्शनानन्दनिर्वृतम् ॥१०१॥
आरोप्य करिणीं तं च राजा संभृतमङ्गलम् ।
स्वपुरं प्रापयामास चक्रे परममङ्गलम् ॥१०२॥
अभ्यसिञ्चद् यौवराज्ये ध्रुवं सर्वगुणान्वितम् ।
अत्रोढवयसं दृष्ट्वा दारैः संयोज्य तं ध्रुवम् ॥१०३॥
आराधयिष्यन् गोविन्दं वनमेव जगाम ह ।
उत्तमस्तु कृतोद्वाहो मृगयां विचरन् वने ॥१०४॥
यक्षेण निहतो माता सुरुचिस्तस्य भूपते ।
अन्वेषमाणा तं पुत्रं प्रविवेश हुताशनम् ॥१०५॥
ध्रुवस्तु यक्षनिहतं श्रुत्वा भ्रातरमुत्तमम् ।
उदीचीं दिशमासाद्य बहून् यक्षान् जघान ह ॥१०६॥

---

९६b : पूगपोभिः C
९९a : पुत्रं not found in D
१००d : संमुदम् D
१०३a : अभ्यसिञ्च्य A
१०३b : सर्वगुणान्वितम् not found in G

अथ स्वायंभुवो राजन् समागत्य न्यवारयत् ।
वैष्णवस्य तव द्वेषो न यक्षैः सह शोभते ॥१०७॥
उपदेवा इमे वत्स कुबेरानुचरा ध्रुवम् ।
तच्छ्रुत्वाऽसौ निवृत्तोऽभूत् यक्षानां निधनान्नृप ॥१०८॥
धनदोऽथ समागत्य शुभाशीर्भिः समर्च्य च ।
स्वपुरं प्रेषयामास स्वयं च स्वपुरं ययौ ॥१०९॥
राज्यं चक्रे महाराज वर्षाणां तु सहस्रकम् ।
षट्त्रिंशत्संख्यकं भूमौ पितृवत् पालयन् प्रजाः ॥११०॥
आत्मजेषु महीं न्यस्य कालं दृष्ट्वा समागतम् ।
पुनर्मधुवनं प्राप्य तपस्तेपे महामतिः ॥१११॥

सुनन्द उवाच

ततो भगवताऽऽदिष्टो राजन्नहमरिन्दमम् ।
ध्रुवं नेतुमगां तत्र नन्देन च समन्वितः ॥११२॥
ततो मां वीक्ष्य मानेन समायातं ध्रुवस्तदा ।
प्रणम्य दण्डवद् भूमौ मामुवाच कृताञ्जलिः ॥११३॥
कस्त्वमायातवान् देव विमानेन प्रभान्वितः ।
अपि वैकुण्ठपादाब्जमकरन्दमधुव्रतः ॥११४॥
तमाश्लिष्याहमवदं यथा वदसि सुव्रत ।
तथैवाहं भगवता प्रेषितस्तव सिद्धये ॥११५॥
आरोहैतद्विमानाग्र्यं गच्छ स्थानं महोदयम् ।
विनिर्मितं भगवता ज्योतिषामुपरि ध्रुवम् ॥११६॥

---

१०६a : तमागत्य BF
१०६b : तमर्च्य ACGH
११०b : च (for तु) AF
११३b : तथा D
११४d : °मधुव्रत AD

इत्युक्त्वा तमथारोप्य विमानं भानुभास्वरम् ।
प्रतस्थेऽहं महाराज ध्रुवलोकाय सत्वरः ॥११७॥
ततः समाब्रवीत् किञ्चिद् विमना इव भूपते ।
नाहं व्रजामि यानेन पदमूर्ध्वं तया विना ॥११८॥
सुनीत्या नाम मात्रा हि निवर्तय महारथम् ।
तच्छ्रुत्वाहं तमवदं ध्रुव किं खिद्यते त्वया ॥११९॥
पश्य ते याति मातेयं तवाप्यग्रे महाद्युतिः ।
स दृष्ट्वा मातरं तत्र गच्छन्तीं पुरतो दिवि ।
प्रहृष्टवदनो भूत्वा मया सह जगाम ह ॥१२०॥
ततस्तं वियता नीत्वा स्थापयित्वाऽक्षये पदे ।
अनुज्ञाप्य विमानेन वैकुण्ठं पुनरभ्यगाम् ॥१२१॥
इति ते कथितं राजन् ध्रुवस्य चरितं महत् ।
यः शृणोति स चाप्नोति तत् पदं नात्र संशयः ॥१२२॥

इति श्रीपद्मपुराणे स्वर्गखण्डे ध्रुवचरितं त्रयोदशोऽध्यायः ॥१३॥

---

११९a : मम FH
पुष्पिका : इत्यादि महापुराणे पाद्मे A

# १४

सुनन्द उवाच

स्वर्लोकोपरि राजेन्द्र महर्लोकस्ततोऽद्भुतः ।
कल्पायुषो वसन्त्यत्र तपसा धूतकल्मषाः ॥१॥
विष्णुस्मरणसंक्षीणसमस्तक्लेशसंचयाः ।
निर्व्याजप्रणिधानेन दृष्ट्वा तेजोमयं जगत् ॥२॥
महायोगसमायुक्ता वसन्त्यत्र सुरोत्तमाः ।
न तत्र पुनरावृत्तिर्विद्यते भुवि भूपते ॥३॥
महाप्रलयकाले तु तत्रस्था ये सुवर्चसः ।
सर्वभूतैर्विशन्त्येव सहैव भगवत्तनुम् ॥४॥
यदाब्जयोनिः शेते च सन्ध्यायां स्वस्य मानतः ।
तदैकादशरुद्राणां दह्यन्ते हि मुखाग्निना ॥५॥
एकादशैव भुवनान्यन्येन सह पार्थिव ।
तदा तद्वासिनो ये च तप्ताः प्रलयवह्निना ॥६॥
जनलोके वसन्त्येव नाप्नुवन्ति क्षयं नृप ।
तदूर्ध्वं ज्ञानलोकस्तु महाराज महाद्युतिः ॥७॥
वसन्ति तत्र विमला ब्रह्मणो मानसाः सुताः ।
सनन्दनाद्या योगीन्द्राः सर्वे ते ह्यूर्ध्वरेतसः ॥८॥

---

३c : ततः GH
४d : प्रलये (for सहैव) C
५ab : सन्ध्यायां शेते च G
७a : वसन्त्येते G
७b : स्वयं H
८b : मानसः e

अन्येऽपि योगिनो ये वै ह्यस्खलद्ब्रह्मचारिणः ।
सर्वद्वन्द्वविनिर्मुक्तास्ते वसन्ति सुनिर्मलाः ॥९॥
तस्योपरि तपोलोकस्तेजोमय उदाहृतः ।
वैराजा यत्र ते देवा वसेयुर्देवपूजिताः ॥१०॥
वासुदेवे मनो येषां वासुदेवेऽर्पिताः क्रियाः ।
तपसा तोष्य गोविन्दमभिलाषविवर्जिताः ॥११॥
तं तपोलोकमासाद्य वसन्ति विजितेन्द्रियाः ।
शिलोञ्छवृत्तयो ये वै दन्तोलूखलकाश्च ये ॥१२॥
येऽश्मकुट्टाश्च मुनयः शीर्णपर्णाशिनश्च ये ।
ग्रीष्मे पञ्चाग्नितपसो वर्षासु स्थण्डिलेशयाः ॥१३॥
हेमन्ते शिशिरे वा ये क्षिपन्ति सलिले क्षपाः ।
कुशाग्रनीरविन्दूंश्च तृषिता यतयोऽपिबन् ॥१४॥
वाताशिनोऽतिक्षुधिताः पादाङ्गुष्ठाग्रभूस्पृशः ।
ऊर्ध्वहस्ता रविदृशस्त्वेकाङ्घ्रिस्थाणुनिश्चलाः ॥१५॥
ये वै दिवा निरुच्छ्वासा मासोच्छ्वासाश्च ये परे ।
मासोपवासं कुर्वन्ति चातुर्मास्यव्रताश्च ये ॥१६॥
ऋत्वन्ते तोयपाना ये ये षण्मासोपवासकाः ।
ये च वर्षनिमेषा वै वर्षाधाराम्बुतर्षुकाः ॥१७॥
स्थाणुसाम्योपसंप्राप्ता मृगकण्डूतिसौख्यदाः ।
जटाटवीकोटरान्तकृतनीडाण्डजाश्च ये ॥१८॥

---

९a : च A
९d : भवन्ति H
१०a : अस्योपरि C
१२cd : not found in A
१३a : not found in A
१३b : °पर्णासिनाः G
१७d : °तर्षकाः Ce FGH

प्ररूढवल्मिकाङ्गाश्च स्नायुनखास्थिसंचयाः ।
लताप्रतानैः परितो वेष्टितावयवाश्च ये ॥१९॥
सस्यानि च प्ररूढानि यदङ्गेषु महीपते ।
इत्येतैर्नियमैर्ये तु क्लिष्टात्मानस्तपोधनाः ॥२०॥
ब्रह्मायुषस्तपोलोके ते वसन्त्यकुतोभयाः ।
ततस्तु सत्यलोको हि सर्वेभ्योऽपि समुज्ज्वलः ॥२१॥
यत्र ब्रह्मा महाराज सर्ववेदप्रवर्तकः ।
सावित्र्या सहितःसर्वैर्देवैरपि महीयते ॥२२॥
ये तु सत्येन जीवन्ति ब्राह्मणा ब्रह्मवित्तमाः ।
यागकर्मरता नित्यं वेदवेदान्तपारगाः ॥२३॥
देवरूपेण ते राजन् सत्यलोके वसन्ति वै ।
इति ते कथितो राजन् यत्पृष्टो भवता ह्यहम् ॥२४॥
स्वर्लोकानां तु सप्तानां मानं लक्षणमेव च ।
साधनं चापि लोकेषु वासाय परिकीर्तितम् ॥२५॥
तत्र राहोरुपरिष्टाद् ध्रुवलोकावधि प्रभो ।
राशिचक्रं वदन्त्येतद् यत्र द्वादशराशयः ॥२६॥
अश्विन्यादिकताराणां पादैर्नवभिरीरिताः ।
मेषो वृषश्च मिथुनं कर्कटः सिंह एव च ॥२७॥

---

२०a : शस्यानि B
२०b : महीयते H
२०c : च F
२२d : महीपते F
२३a : येन AF
२३c : योग° G
२४c : कथितं FG
२४d : यत् पृष्टोऽहं त्वयानघ G
२६c : एतत् A

कन्या तुला वृश्चिकश्च धनुर्मकर एव च ।
कुम्भो मीनश्च राजेन्द्र क्रमाद् द्वादश ते स्मृताः ॥२८॥
तेषु सूर्यादयश्चैव तिष्ठन्ति क्रमशो ग्रहाः ।
एकराशौ रविर्मासं दिनयुग्मं निशाकरः ॥२९॥
सपादं धरणीसूनुस्त्रिपक्षं सोमपुत्रकः ।
दिनान्यष्टादशप्रायो गीष्पतिर्वर्षमेव हि ॥३०॥
अष्टाविंशद् दिनं शुक्रः सार्धवर्षद्वयं शनिः ।
सार्धैकवर्षं स्वर्भानुराशीन् भुङ्क्ते महीपते ॥३१॥
शिशुमाराकृति ज्ञेयं राशिचक्रं विचक्षणैः ।
स्वर्लोकस्य तु संस्थानं शृण्वन्ति श्रद्धयान्विताः ।
स्वर्गेषु क्रमशो वासं लभन्ते नात्र संशयः ॥३२॥

इति श्रीपद्मपुराणे स्वर्गखण्डे चतुर्दशोऽध्यायः ॥१४॥

---

२९a : चैते eH
३०d : च D
३२a : °आकृतिर्ज्ञेयो C
३२c : च A
पुष्पिका: इत्यादि महापुराणे पाद्मे AF
G adds सुनन्दभरतसंवादे after स्वर्गखण्डे
C adds ओं श्रीकृष्णाय नमः after °ध्यायः

# १५

सुनन्द उवाच

अतो वैकुण्ठलोकं ते वर्णयामि महामते ।
यत्र नारायणः साक्षाद् भगवाञ् जगदीश्वरः ॥१॥
यत्र गच्छन्ति तद्भक्ताः सर्वकामविवर्जिताः ।
सदा ब्रह्मसुखं तत्र नावृत्तिस्तु ततो भवेत् ॥२॥
तत्र भक्ता मुकुन्दस्य मुकुन्दसमवर्चसः ।
सर्वे नीलोत्पलश्यामाः सर्वे चारुचतुर्भुजाः ॥३॥
सर्वे किशोरवयसो नानालंकारभूषिताः ।
एते स्वरादयो लोका भवतो ये उदाहृताः ॥४॥
ते कलामपि नार्हन्ति कलानामपि भूपते ।
यत्र नारायणः साक्षी भगवान् परमेश्वरः ।
त्वमनेन विमानेन तं लोकं याहि मानद ॥५॥

शेष उवाच

इत्युक्त्वा तं सुनन्दोऽथ यानमारोप्य वैष्णवम् ।
लोकं वैकुण्ठमारोहत् सुराणां विप्र पश्यताम् ॥६॥
एतत् ते कथितं विप्र दिवो मानमशेषतः ।
चरितं राजराजस्य भरतस्य महामतेः ।
यच्छ्रुत्वैव नरः सद्यो मुच्यते कर्मबन्धनात् ॥७॥

---

२a : तत्र C
४d : य Ce FGH
५cd : not found in ABCFGH
६a : सुनन्दोऽसौ A
: उक्त्वाथ सुनन्दस्तं G
७d : महात्मनः A
७e : तत् श्रुत्वैव A

वात्स्यायन उवाच

राजानो ये महाभागाः क्रियावन्तो गुणान्विताः ।
सूर्यवंशे चन्द्रवंशे जाताः सुकृतकर्मिणः ॥८॥
लोकेषु केषु के पुत्रा वसन्ति विमलाशयाः ।
तत् सर्वं मे कृपाराशे वक्तुमर्हसि भूधर ॥९॥

शेष उवाच

शृणु विप्र प्रवक्ष्यामि राज्ञां सुकृतकर्मणाम् ।
स्वर्गे वासो यथा यस्य स्वस्वकर्मविनिर्मितः ॥१०॥
अन्तरिक्षचरा ये च भूतप्रेतपिशाचकाः ।
वर्जयित्वा रुद्रगणास्ते तथैव चरन्ति हि ॥११॥
नोर्ध्वं विक्रमणे शक्तिस्तेषां संभृतपाप्मनाम् ।
अत ऊर्ध्वं हि विप्रेन्द्र राक्षसा ये कृतैनसः ॥१२॥
ते तु सूर्यादधः सर्वे विहरन्त्यूर्ध्ववर्जिताः ।
अत ऊर्ध्वं प्राप्तलोका यक्षगन्धर्वकिन्नराः ॥१३॥
ये च रुद्रगणा विप्र कृतपुण्याः शुचिव्रताः ।
राजानश्च महाभाग मुनयश्च धृतव्रताः ॥१४॥
स्वर्लोकवासिनः सर्वे ते च सर्वत्रगामिनः ।
ब्रह्माण्डमध्ये भ्राम्यन्ति शक्ता गन्तुं न वैष्णवम् ॥१५॥

---

८c : सूर्याचन्द्रमसोर्वंशे G
८d : जाता ये कृतं D
: °कर्मिणाम् F
९a : केषु not found in D
१२c : तत e
: महीदेव (for हि विप्रन्द्र) G
१२c-१३b : not found in C
१३c : तत e
१५cd and १६ab interchange position in G

स्थितिस्तु कर्मणा लब्धा लोकत्रयनियोजिता ।
तत्र ये शक्रलोकस्था राजान ऋषयस्तथा ॥१६॥
तांस्तेऽहं कीर्तयिष्यामि कृतपुण्यान् महात्मनः ।
हरिश्चन्द्रोऽथ मान्धाता सगरो हैहयस्तथा ॥१७॥
दिलीपो धुन्धुमारोऽपि पृथाश्वो जनकस्तथा ।
ययातिर्नहुषः पूरुः कृतवीर्यः श्रुतश्रवाः ॥१८॥
अरिष्टः सिंहसेनश्च राजानः शक्रलोकगाः ।
सिद्धा देवर्षयश्चैव साध्या देवगणास्तथा ॥१९॥
मरुत्वन्तश्च सहिता भास्वन्तो हेममालिनः ।
पराशरः पर्वतश्च तथा सावर्णिगालवौ ॥२०॥
शंखश्च लिखितश्चैव तथा गौरमुखो मुनिः ।
दुर्वासाः क्रोधनश्चैव याज्ञवल्क्योऽथ भालुकिः ॥२१॥
उद्दालकः श्वेतकेतुस्तथा शाट्यायनः प्रभुः ।
एवमादिर्मुनिगणः शक्रलोके महीयते ॥२२॥
एते तु सततं विप्र शक्रलोके सभासदः ।
संमन्त्रयन्ति शक्रेण शक्रतुल्याः प्रकीर्तिताः ॥२३॥
एतेषामक्षयः स्वर्ग आकल्पान्त उदाहृतः ।
कल्पावसाने विप्रेन्द्र प्राप्स्यन्ति ब्रह्मसात्मताम् ॥२४॥
अन्ये ये सन्ति राजानः कृतपुण्या महत्तराः ।
युद्धस्थाने मृता ये च दाने यज्ञे रताश्च ये ॥२५॥

---

१६a : स्थितिश्च A
१६b : लोक एव C
२२c : °गणाः D
२४d : व्रजन्ति A
: °सात्वताम् B
२५a : के D

इन्द्रस्य लोकमासाद्य निवसन्ति यथासुखम् ।
तांश्च ते कथयिष्यामि भूपतीन् कृतपुण्यकान् ।
त्रसदस्युश्च राजर्षिः कृतवेगः कृमिर्निमिः ॥२६॥
प्रतर्दनः शिविर्मत्स्यः पृथुलाश्वो बृहद्रथः ।
इन्द्रस्य लोकमासाद्य निवसन्ति यथासुखम् ॥२७॥
सुनीथो नैषधश्चैव बलो राजा परिश्रुतः ।
दिवोदासोऽथ सुमना अम्बरीषो भगीरथः ॥२८॥
व्यश्वः सदश्वो ब्रघ्नश्च पृथुवेगः पृथुश्रवाः ।
वृहदश्वो वसुमनाः क्षुपश्च सुमहाबलः ॥२९॥
रुषद्गुर्वृषसेनश्च शर्यातिः शरभः शुचिः ।
आर्ष्णिसेनो दिलीपश्च पुरुकुत्सो ध्वजी रथी ॥३०॥
अङ्गो दिष्टश्च दुष्यन्तः सृञ्जयो विजयो जयः ।
भङ्गिस्वरिः सुनीथोऽथ नैषधोऽथ वहीनरः ॥३१॥
करन्धमो बाह्लिकश्च शशबिन्दुश्च पार्थिवः ।
अलर्कः कक्षसेनश्च सहदेवार्जुनौ तथा ॥३२॥
कपोतरोमा तृणको मरुत्तश्च महीपतिः ।
भूरिद्युम्नो महाश्वश्च पृथाश्वो जनकस्तथा ॥३३॥
राजा वैन्यो बोधसेनः पुरुजिज्जनमेजयः ।
ब्रह्मदत्तस्त्रिगर्तश्च राज्ञो परिचरस्तथा ॥३४॥

---

२६ab : not found in Ae F
२६e : राजेन्द्रः G
२७b : पृथुलाक्षो CG
२७cd : not found in C
२८b : °श्रुतिः eF
३१b : सञ्जयो D
३१d : निषोधोऽथ H
: मह्रीनरः G
३२b : पार्थिव A
३२c : कर्क° A
३३b : मरुतश्च D

इन्द्रद्युम्नो भीमजानुः गौरपृष्ठो नयोऽनघ ।
पद्मोऽथ मुचुकुन्दश्च पृथुलाक्षोऽष्टकस्तथा ॥३५॥
एते चान्ये च बहवः इक्ष्वाकुप्रमुखा द्विज ।
चन्द्रसूर्यकुले जाता राजानो भूरिदक्षिणाः ।
स्वर्गलोकमलंकृत्य वसन्ति भूरिवर्चसः ॥३६॥

वात्स्यायन उवाच

ये स्वर्गवासिनो भूपाः कीर्तिता भूरिदक्षिणाः ।
तेषां तु शेष चरितं श्रोतुमिच्छामि विस्तरात् ।
कृपया यदि मे ब्रूहि नागराज धराधर ॥३७॥

शेष उवाच

तेषां कार्त्स्न्येन चरितं सहस्रवदनो ह्यहम् ।
वक्तुं शक्नोमि कार्त्स्न्येन न श्रोतुं तत् क्षमो भवान् ॥३८॥
प्राधान्येनैव वक्ष्यामि केषांचिद् द्विजसत्तम ।
य एष ते मया प्रोक्तः सगरो नाम भूपतिः ॥३९॥
तस्य ते चरितं वक्ष्ये शृणु विप्र महामते ।
सूर्यवंशे महाराज बाहुर्नाम महानभूत् ॥४०॥
तस्य राज्यं हृतं सर्वं हैहयैस्तालजङ्घकैः ।
काम्बोजाः पह्लवाश्चैव पारदा यवनाः शकाः ॥४१॥
एते पञ्चगणा ब्रह्मन् हैहयार्थे पराक्रमन् ।
हृतराज्यस्तदा विप्र स वै बाहुर्वनं ययौ ॥४२॥
पत्नी तु यादवी तस्य गुर्विन्यासीत् पतिव्रता ।
तत्सपत्न्या पूर्वमेव तस्या गर्भजिघांसया ॥४३॥
भोजनेन सह प्रादाद् गरं धर्मानवेक्षया ।
यादव्यास्तु तपोयोगाद् गर्भो नैवं ममार ह ॥४४॥

---

३५b : °नघः F
३६f : वसन्ते Ce
४२cd : स वै विप्र तदा C

न ममार च सा राज्ञी देवानामनुकम्पया ।
पतिं सानुययौ साध्वी सिषेवे तं वने सदा ॥४५॥
स राजा विपिने तस्मिन् प्राणांस्तत्याज योगवान् ।
सा तु भर्तुश्चितिं कृत्वा वने तामध्यरोहत ॥४६॥
और्वस्तां भार्गवस्तात कारुण्यात् समवारयत् ।
तस्याश्रमे च सा गर्भं सुषुवे ज्वलनप्रभम् ॥४७॥
व्यजायत महाबाहुर्गरेणैव सह द्विज ।
सगरो नाम तेनाभूद् बालकोऽतिमनोहरः ॥४८॥
और्वस्तु जातकर्मादि तस्य कृत्वा महात्मनः ।
अध्याप्य वेदानखिलान् शास्त्राणि प्रत्यपादयत् ॥४९॥
आग्नेयं तु महाघोरममरैरपि दुःसहम् ।
स तेनास्त्रबलेनाजौ बलेन च समन्वितः ॥५०॥
हैहयांस्तालजङ्घांश्च जघ्ने रुद्रः पशूनिव ।
जनयामास लोकेऽस्मिन् कीर्तिं कीर्तिमतां वरः ॥५१॥
ततः शकान् स यवनान् काम्बोजान् पारदांस्तथा ।
पह्लवांश्चापि निःशेषान् कर्तुं व्यवसितो नृपः ॥५२॥
ते हन्यमाना वीरेण सगरेण महौजसा ।
वसिष्ठं शरणं जग्मुः सूर्यवंशपुरोहितम् ॥५३॥
वसिष्ठः शरणापन्नान् समये स्थाप्य तानृषिः ।
सगरं वारयामास तेभ्यो दत्त्वाभयं तदा ॥५४॥
सगरस्तां प्रतिज्ञां तु निशम्य सुमहाबलः ।
धर्मं जघान तेषां च केशानन्यांश्चकार ह ॥५५॥
ऊर्ध्वं शिरः शकानां मुण्डयामास भूपतिः ।
यवनानां शिरः सर्वं काम्बोजानामपि द्विज ॥५६॥

---

४७c : च not found in A
४८c : तेनासीद् A
५४d : सदा G
५५d : वेशान् CGH

पारदान् मुक्तकेशांस्तु पह्लवान् श्मश्रुधारिणः ।
निःस्वाध्यायवषट्कारान् सर्वानेव चकार तान् ॥५७॥
कोलिसर्पा माहिषका दर्वाश्चोलाः सकेरलाः ।
खसास्तुषाराश्चीनाश्च मद्राः किष्किन्धकास्तथा ॥५८॥
कौन्तलाश्च तथा वङ्गाः शाल्वाः कोङ्कनकास्तथा ।
सर्वे ते क्षत्रियास्तात धर्मास्तेषां निराकृताः ॥५९॥
पुरोहितस्य वाक्येन कृता विकृतवेशिनः ।
वशीकृत्य स राजन्यान् स्वराज्यमन्वशासत ॥६०॥
तस्य भार्ये त्वभवतां यौवनेन समन्विते ।
वैदर्भी च महाभाग शैव्या चैव पतिव्रता ॥६१॥
स पुत्रकामो नृपतिस्तप्यते स्म महत् तपः ।
पत्नीभ्यां सह राजेन्द्रो गिरिं कैलासमाश्रितः ॥६२॥
तप्यमानस्य नृपतेः पिनाकी भगवान् प्रभुः ।
प्रादुरासीन् महाभाग त्र्यक्षस्त्रिपुरमर्दनः ॥६३॥
स तं दृष्ट्वैव वरदं महादेवं पिनाकिनम् ।
प्रणिपत्य मुहुः स्तुत्वा पुत्रार्थं समयाचत ॥६४॥
तं प्रीतिमान् हरः प्राह सभार्यं प्रणतं पुरः ।
अस्मिन् वृतो मुहूर्तेऽहं त्वया नरपते वरम् ॥६५॥
षष्टिः पुत्रसहस्राणि शूराश्च बलवत्तराः ।
एकस्यां ते भविष्यन्ति पत्न्यां भूपतिसत्तम ॥६६॥
ते चैव सर्वे सहिताः क्षयं यास्यन्ति पार्थिव ।
एको वंशधरः शूर एकस्यां संभविष्यति ॥६७॥

---

५७a : मुक्तकेशांश्च A
५७d : चकार ह C
६०c : वशीकृत्वा A वशेकृत्वा F वशेकृत्य GH
६१c : महाभागा H
६२a : अपत्यकामो A
६७c : शूरः D

एवमुक्त्वा तु तं रुद्रस्तत्रैवान्तरधीयत ।
सगरोऽपि वरं प्राप्य जगाम स्वपुरं द्विज ॥६८॥
पत्नीभ्यां सहितस्तात सोऽतिहृष्टमनास्तदा ।
तस्य ते ब्राह्मणश्रेष्ठ भार्ये कमललोचने ॥६९॥
वैदर्भी चैव शैब्या च दधतुर्गर्भमुत्तमम् ।
ततः कालेन वैदर्भी गर्भालाबुं व्यजायत ॥७०॥
शैब्या च सुषुवे पुत्रं कुमारं देवरूपिणम् ।
अलाबुं तु समुत्स्रष्टुं प्रवृत्ते सगरे द्विज ॥७१॥
अशरीरा तदा वाणी प्रादुरासीन् महास्वना ।
अलाबुं मा नृप त्याक्षीर्बीजान्याकृष्य यत्नतः ॥७२॥
सोपस्वेदेषु पात्रेषु घृतपूर्वेषु भागशः ।
निधीयन्तां महाराज धात्रीश्चैव नियोजय ॥७३॥
ततः पुत्रसहस्राणि षष्टिं प्राप्स्यसि पार्थिव ।
आदिष्टं देवदेवेन पुत्रजन्म जनाधिप ॥७४॥
अनेन क्रमयोगेन मा ते भून्मतिरन्यथा ।
एतच्छ्रुत्वान्तरिक्षाच्च स राजा द्विजसत्तम ॥७५॥
यथोक्तमेव चक्रेऽसौ श्रद्दधानो हि तद् वचः ।
एकैकशस्ततः कृत्वा बीजं बीजं पृथक् पृथक् ॥७६॥
घृतपूर्णेषु पात्रेषु तान् भागान् समसज्जयत् ।
धात्रीश्चैकैकशः प्रादात् रक्षायै स महाभुजः ॥७७॥
ततः कालेन महता समुत्तस्थुर्महाबलाः ।
षष्टिपुत्रसहस्राणि सममेव द्विजर्षभ ॥७८॥
रुद्रप्रसादादुत्पन्ना महाबलपराक्रमाः ।
ते घोराः क्रूरकर्माण आकाशपरिसर्पिणः ॥७९॥

---

७०d : गर्भेऽलाबुं A
७१c : च (for तु) F
७५c : एतत् श्रुत्वा° AC
७६a : उत्पत्या Ce H

बहुत्वाच्चावजानन्तः सर्वाँल्लोकान् महत्तमान् ।
त्रिदशांश्चाप्यबाधन्त गन्धर्वादीन् सराक्षसान् ॥८०॥
पीड्यमानास्ततो लोका बलिभिः सगरात्मजैः ।
ब्रह्माणं शरणं जग्मुः सहिताः सर्वदैवतैः ॥८१॥
तानुवाच महाभाग ब्रह्मा विश्वसृजां पतिः ।
गच्छध्वं त्रिदशाः सर्वे लोकैः सार्धं यथागतम् ॥८२॥
अचिरेणैव कालेन नङ्क्ष्यन्ति सगरात्मजाः ।
एवमुक्तास्तु ते देवा लोकाश्च परमेष्ठिनम् ॥८३॥
अनुज्ञाप्य ययुः सर्वे स्वं स्वं स्थानं महामते ।
गते बहुतिथे काले सगरः स महीपतिः ॥८४॥
दीक्षितो वाजिमेधेन बभूव द्विजसत्तम ।
पुत्रांश्च षष्ठिसाहस्रान् न्ययुङ्क्त हयरक्षणे ॥८५॥
ते हयं रक्ष्यमाणास्तु महाबलपराक्रमाः ।
बहुशोऽपि नरेन्द्राणां युद्धे प्राणानपाहरन् ॥८६॥
शक्रः सोढुं न शशाक वाजिमेधं नृपस्य तु ।
जहार वाजिनं मायामाश्रित्य सिन्धुवर्त्मना ॥८७॥
सागरास्तु तमन्विष्य सप्तद्वीपान् ससागरान् ।
अप्राप्य तं हयं क्वापि भृशमासन् सुदुःखिताः ॥८८॥
आगम्य पितुराचख्युरदृश्यं तुरगं हृतम् ।
तेनोक्ता दिक्षु सर्वासु सर्वे मार्गन्तु वाजिनम् ॥८९॥
ते पित्रा पुनराज्ञाता दिक्षु सर्वासु तं हयं ।
अमार्गन्त महाभाग सर्वं च पृथिवीतलम् ॥९०॥

---

८०c : अधावन्त D
८३cd · ते लोका देवाश्च C
८५c : पुत्रांस्तु C
८५d : न्ययुञ्ज्य A
८८a : अन्विष्यन् F
८९d : मार्गंत G

तलस्तु सागराः सर्वे समुत्पत्या परस्परम् ।
नाध्यगच्छंस्तं तुरगं अश्वहर्तारमेव वा ॥९१॥
आगम्य पितरं ते तु पुनरूचुर्महीपतिम् ।
ससमुद्रवनद्वीपा सनदीनदकन्दरा ॥९२॥
सपर्वतवना राजन् पृथिवी परिमार्गिता ।
न लभ्यते हयः क्वापि वाजिहर्ताऽपि भूपते ॥९३॥
श्रुत्वा तु वचनं तेषां स राजा क्रोधमूर्च्छितः ।
उवाच वचनं सर्वांस्तदा दैववशान् नृपः ॥९४॥
यात यूयं तमश्वं वै यावन्नाप्नूथ पुत्रकाः ।
नागन्तव्यं पुनस्तावन्मत्सकाशे कथंचन ॥९५॥
इति श्रुत्वा तु तद् वाक्यं पितुस्ते सगरात्मजाः ।
भूय एव महीं कृत्स्नां विचेतुमुपचक्रमुः ॥९६॥
अथापश्यन्त ते वीराः पृथिवीमवदारिताम् ।
समासाद्य बिलं तच्चाप्यखनन् सगरात्मजाः ॥९७॥
कुद्दालैर्हलकैश्चैव समुद्रमभितो द्विज ।
स खन्यमानः सहितैः समुद्रः सगरात्मजैः ॥९८॥
जगाम परमामार्तिं दार्यमाणः समन्ततः ।
असुरोरगरक्षांसि जन्तवो विविधास्तथा ॥९९॥
हाहानादमकुर्वन्त बध्यमानास्तु सागरैः ।
छिन्नशीर्षा भिन्नमुखा भिन्नत्वगस्थिसन्धयः ।
प्राणिनो व्यलुठन् विप्र शतशोऽथ सहस्रशः ॥१००॥

---

९१b : °समुत्पत्य G
९३b : परिमाणिता H
९६-९८d : not found in AF
९९c : असुरवर्ग° G
१००b : वध्यमानानि AeFGH
१००cd : मुखाश्छिन्न°C
१००d : °सञ्चयाः A

एवं हि खनतां तेषां समुद्रं सुमहौजसाम् ।
कालो महान् व्यतीयाय न चाश्वः समदृश्यत ॥१०१॥
ततः पूर्वोत्तरे देशे समुद्रस्य महामते ।
विदार्य पातालमथ प्रविष्टाः सगरात्मजाः ॥१०२॥
अपश्यन्त हयं तत्र विचरन्तं तृणानि च ।
कपिलं च मुनिं तत्र ददृशुस्तेजसोल्वणम् ॥१०३॥
ते तु तं वाजिनं दृष्ट्वा संप्रहृष्टतनूरुहाः ।
कपिलं त्वश्वहर्तारं मन्यमाना महाबलाः ॥१०४॥
अधावन्त ततः क्रुद्धाः शूलमुद्गरपाणयः ।
ततः क्रुद्धो महाभाग कपिलो मुनिसत्तमः ॥१०५॥
वासुदेवेति यं प्राहुर्देवहूतीसुतं प्रभुम् ।
स चक्षुर्विकृतं कृत्वा व्यलोकयत तां मुनिः ॥१०६॥
तस्य नेत्रात् समुद्भूतः पावकः परितो ज्वलन् ।
ददाह सुमहाज्वालः कुबुद्धीन् सगरात्मजान् ॥१०७॥
तान् दृष्ट्वा भस्मसाद् भूतान् नारदो भगवान् ऋषिः ।
सगरान्तिकमासाद्य तस्मै सर्वं न्यवेदयत् ॥१०८॥
स तं श्रुत्वा वधं घोरं पुत्राणां नारदान् मुनेः ।
मुहूर्तं विमना भूत्वा रुद्रवाक्यमचिन्तयत् ॥१०९॥
आत्मानमात्मनाश्वास्य हयमेवान्वचिन्तयत् ।
अंशुमन्तं समाहूयासमञ्जसः सुतं तदा ॥११०॥
पौत्रमाह महाभाग सान्त्वपूर्वमिदं वचः ।
षष्टिस्तानि सहस्राणि पुत्राणाममितौजसाम् ॥१११॥

---

१०५a : अबाधन्त A
१०६a : तं A
१०६b : देवहूति° A
१०९a : तत्श्रुत्वा ACFGH
११०ab : not found in e

कापिलेनैव महसा गतानि निधनं किल ।
तव चापि पिता वत्स परित्यक्तो मयाऽनघ ।
धर्मं संरक्षमाणेन पौराणां हितमिच्छता ॥११२॥

वात्स्यायन उवाच

किमर्थं राजशार्दूलः सगरः पुत्रमात्मजम् ।
त्यक्तवान् दुस्त्यजं वीरं तन्मे ब्रूहि महीधर ॥११३॥

शेष उवाच

असमञ्ज इति ख्यातः सगरस्य सुतोऽभवत् ।
यः शैव्यागर्भतो जज्ञे पौराणां स हि बालकान् ।
गलेषु क्रोशतो बध्वा जले चिक्षेप दुर्बलान् ॥११४॥
ततः पौराः समाजग्मुर्भयशोकपरिप्लुताः ।
सगरं चाभ्ययाचन्त सर्वे प्राञ्जलयः स्थिताः ॥११५॥
त्वं नस्त्राता महाराज परचक्रादिभिर्भयात् ।
असमञ्जोभयाद् घोराद् राजन् नस्त्रातुमर्हसि ॥११६॥
पौराणां वचनं श्रुत्वा घोरं स नृपसत्तमः ।
मुहूर्तं विमना भूत्वा सचिवानिदमब्रवीत् ॥११७॥
असमञ्जाः पुरादस्मात् सुतो मे विप्रवास्यताम् ।
मत्प्रियं यदि चेच्छध्वमेतच्छीघ्रं विधीयताम् ॥११८॥
एवमुक्ता नरेन्द्रेण सचिवास्ते महामते ।
यथोक्तं त्वरिताश्चक्रुर्यथाज्ञापितवान् नृपः ॥११९॥
असमञ्जास्तु तान् बालान् प्रक्षिप्तांस्तु जले पुरा ।
पुनर्योगबलेनैव दर्शयित्वा ययौ वनम् ॥१२०॥

---

११२a : कपिलेनैव CD
११६c : असमञ्जा C
११८c : वाञ्छध्वं AFG वेच्छध्वं H
११९c : त्वरितं G

विरक्तो विषयेष्वेवमकार्षीत् पूर्वमात्मनः ।
विप्रवासाय योगेन हरेराराधनेच्छया ॥१२१॥
पौरास्तु बालकान् दृष्ट्वा प्रमृतान् पुनरागतान् ।
राजा विज्ञाय तच्छक्तिमन्वतप्यन् महामते ॥१२२॥
एतत् ते कथितं ब्रह्मन् सगरेण महात्मना ।
पौराणां हितकामेन यथा पुत्रो विवासितः ॥१२३॥
अंशुमांस्तु तथा प्रोक्तः सगरेणाश्वमार्गणे ।
जगाम देशं तं ब्रह्मन् यत्र वै दारिता मही ॥१२४॥
स तु तेनैव मार्गेण समुद्रं प्रविवेश ह ।
अपश्यच्च महात्मानं कपिलं तुरगं च तम् ॥१२५॥
स दृष्ट्वा द्विजशार्दूल पुराणमृषिसत्तमम् ।
प्रणम्य शिरसा भूमौ स्तुत्वा कर्माण्यवेदयत् ॥१२६॥
ततः प्रीतो मुनिस्तस्मै वरं दातुं प्रचक्रमे ।
स वव्रे तुरगं तत्र प्रथमं यज्ञकारणात् ॥१२७॥
पितृणां च पुनः स्वर्गं दग्धानां क्रोधवह्निना ।
तमुवाचाथ कपिलो यत् त्वं प्रार्थयसेऽनघ ॥१२८॥
त्वं सत्यवान् क्षमावांश्च सत्यसन्धो महामनाः ।
त्वया कृतार्थः सगरः पुत्रवांश्च त्वया पिता ॥१२९॥
हयं नयस्व भद्रं ते यज्ञियं नरपुङ्गव ।
यज्ञः समाप्यतां तत्र सगरस्य महात्मनः ॥१३०॥
इमे च पितरस्तुभ्यं स्वर्यास्यन्त्येव मानद ।
किन्तु गङ्गाम्बुसंस्पर्शमपेक्षन्ते कुकर्मिणः ॥१३१॥

---

१२२b : प्रमीतान् eGH
१२३a : विप्र D
१२६d : कर्मण्य° A
१२८d : नृप (for °नघ) G
१३०b : नरसत्तम C
१३१b : यान्त्येव च G
१३१d : कुकर्मिणाम् F कुकर्माणः G

अंशुमानेवमुक्तस्तु कपिलेन महात्मना ।
आजगाम हयं गृह्य सगरस्य क्रतुस्थलीम् ॥१३२॥
सोऽभिवाद्य ततः पादौ सागरस्य महीपतेः ।
मूर्ध्नि तेनाभ्युपाघ्रातस्तस्मै सर्वं न्यवेदयत् ॥१३३॥
यथादृष्टं श्रुतं चापि सागराणां क्षयं तथा ।
तच्छ्रुत्वा तु महाभाग सगरो दुःखमत्यजत् ॥१३४॥
यज्ञं समापयामास पौत्रेण कृतसंभृतिः ।
समाप्तयज्ञः सगरो देवैः सर्वैश्च सत्कृतः ।
पुत्रत्वे कल्पयामास समुद्रं सरितां पतिम् ॥१३५॥
प्रशास्य सुचिरं कालं सगरः पृथिवीतलम् ।
पौत्रे राज्यं संक्रमय्य जगाम त्रिदशालयम् ॥१३६॥
सगरोपाख्यानमेतत् ते कथितं तु द्विजोत्तम ।
यथा स्वर्गमवापासौ द्वितीय इव देवराट् ॥१३७॥

इति श्रीपद्मपुराणे स्वर्गखण्डे सगरोपाख्यानं पञ्चदशोऽध्यायः ॥१५॥

---

१३२b : कापिलेन F
१३२d : क्रतुं ततः A
१३३c : उपाघ्राय G
१३४c : तत् श्रुत्वा Ce
१३६a : स चिरं BCGH
१३७b : द्विजसत्तम BCH हि द्विजोत्तम D
पुष्पिका : इत्यादि महापुराणे पाद्मे A
G adds शेषवात्स्यायनसंवादे after स्वर्गखण्डे

वात्स्यायन उवाच

कथं गङ्गा समानीता केन किं वा तपस्यता ।
तत् सर्वं शेष मे ब्रूहि कृपया जगतीधर ॥१॥

शेष उवाच

अंशुमानपि धर्मात्मा महीं सागरमेखलाम् ।
पालयामास मेधावी यथा सगर आत्मवान् ॥२॥
तस्य पुत्रः समभवद् दिलीपो नाम धार्मिकः ।
तस्मिन् राज्यं समाधाय तपस्तेपे महामतिः ॥३॥
गङ्गामानेतुकामोऽसौ न शशाक चिरादपि ।
कालेन महता स्वर्गं प्राप पूर्वैरधिष्ठितम् ॥४॥
दिलीपस्तु ततः श्रुत्वा पितॄणां निधनं महत् ।
पर्यतप्यत दुःखेन तेषां गतिमचिन्तयत् ॥५॥
गङ्गावतरणे यत्नं सुमहच्चाकरोन्नृपः ।
नावतारयितुं शक्तश्चेष्टमानो यथाबलम् ।
अजातपुत्रः कालेन कालधर्ममवाप सः ॥६॥
पत्न्यौ द्वे तस्य विप्रेन्द्र सततं पर्यतप्यताम् ।
वसिष्ठाश्रममागत्य तं न्यवेदयतां ततः ॥७॥
प्रनष्टः सागरो वंशो राज्यं च निहतं परैः ।
यद् विधेयं महाभाग तदनुष्ठातुमर्हसि ॥८॥

---

३ab : समभवत् दिलीपो e
३d : स भूपतिः G
७a : पुत्रस्य D
८a : वंशः A
८d-९a : not found in e

तच्छ्रुत्वा तु महाभाग प्रणिधानमथाकरोत् ।
धियाऽथ सर्वं निश्चित्य राज्ञ्यौ प्राह महामुनिः ॥९॥
न संस्थां प्राप्स्यते वंशो मानवोऽयं सुलोचने ।
युवयोर्दृश्यते पुत्रो महात्मा भविता शुभे ॥१०॥
तदहं युवयोरर्थे करिष्ये यत्नमुत्तमम् ।
इत्युक्त्वा ते वसिष्ठोऽथ श्रपयामास मारिष ।
चरुं सर्वगुणोपेतं पुत्रेष्टिविधिना द्विज ॥११॥
उवाच ते महाभागे एकया प्राश्यतां चरुः ।
अन्या पुरुषभावेन मैथुनाय प्रवर्त्तताम् ॥१२॥
एवमुक्ते ततस्ते तु चक्रतुर्मुनिनोदितम् ।
ज्येष्ठा गर्भमथाधत्त काले च सुषुवे सुतम् ॥१३॥
जातः कुमारः पुंसस्तु यदयं रेतसा विना ।
तेनास्थिहीनो जातोऽसौ मांसपिण्ड इव द्विज ॥१४॥
भगीरथेति तन्नाम जातो यद् भगमात्रतः ।
पालयामासतुस्ते च सुतं परमधार्मिकम् ॥१५॥
स बाल एव सर्वान् वै वेदानधिजगाम ह ।
अनस्थित्वात् कुरुपोऽभूद् वक्रदेहविभागकः ॥१६॥
कदाचिद् वेदमध्येष्यन् प्रयातो गुरुसन्निधिम् ।
अष्टावक्रं मुनिं दृष्ट्वा प्रणनाम स बालकः ॥१७॥

---

९a : तत् श्रुत्वा C
: तु not found in H
९c : धिया तु G
११a : श्रयं ABGH
११b : बहुयत्नकं G
१२c : तस्यां ABF
१३d : कालेन G
१५c : ते तु AF
१६c : कुरूपोऽभूत् e

परिभङ्गुरया वाचा भङ्गुराङ्गः स्वभावतः ।
क्रुद्धो मुनिस्तमाहेदमुपहासधिया यदि ॥१८॥
भङ्गुरत्वं दर्शयित्वा प्रणतोऽप्यसि मां प्रति ।
तदा त्वं भस्मसाद् भूया मम वाचा न चान्यथा ॥१९॥
स्वाभाविकमिदं रूपं यदि ते भङ्गुरं भवेत् ।
तदा सुरूपो बलवान् सद्य एव भविष्यसि ॥२०॥
इत्येवमुक्ते मुनिना सद्य एव भगीरथः ।
बभूव बलवाञ्छूरः कन्दर्प इव सुन्दरः ॥२१॥
हृष्टो भगीरथस्तं च प्रणम्य बहुशः स्तुवन् ।
मुहुः प्रदक्षिणीकृत्य तुष्टेन मुनिना पुनः ।
अनुज्ञातो ययौ दिव्यरूपेण गुरुसन्निधिम् ॥२२॥
तं विलोक्य वसिष्ठोऽथ रूपवन्तं महाबलम् ।
राज्येऽभिषेचयामास प्राचीनैः सचिवै र्द्विज ॥२३॥
सोऽभिषिक्तो महाभाग महाबलपराक्रमः ।
प्रत्याजहार तद् राज्यं पैतृकं यत् परैर्हृतम् ॥२४॥
स शुश्राव महाबाहुः कपिलेन महात्मना ।
पितॄणां निधनं घोरमप्राप्तिं त्रिदिवस्य च ॥२५॥
स राज्यं सचिवे न्यस्य हृदयेन विदूयता ।
जगाम हिमवत्पार्श्वे तपस्तप्तुं महायशाः ॥२६॥
आराधयामास गङ्गां तपसा दग्धकिल्बिषः ।
सोऽपश्यत महाभाग हिमवन्तं नगोत्तमम् ॥२७॥
भृङ्गैर्बहुविधाकारैर्धातुमद्भिरलंकृतम् ।
पवनालम्बिभिर्मेघैः परिष्वक्तं समन्ततः ॥२८॥

---

२३d : सचिवैः C
२८d : परिशक्तं F

नदीकुञ्जनितम्बैश्च सोदकैरुपलक्षितम् ।
गुहाकन्दरसंलीनैः सिंहव्याघ्रैर्निषेवितम् ॥२९॥
शकुनैश्च विचित्राङ्गैः कूजद्भिर्विविधा गिरः ।
भृङ्गराजैस्तथा हंसैर्दात्यूहैर्जलकुक्कुटैः ।३०॥
मयूरैः शतपत्रैश्च जीवञ्जीवककोकिलैः ।
चकोरैरसितापाङ्गैस्तथापुत्रप्रियैरपि ॥३१॥
जलस्थानेषु रम्येषु पद्मिनीभिश्च संकुलम् ।
सारसानां च मधुरैर्व्याकृतैः समलंकृतम् ॥३२॥
किन्नरैरप्सरोभिश्च निषेवितशिलातलम् ।
दिग्वारणविषाणाग्रैः समन्ताद् घृष्टपादपम् ॥३३॥
विद्याधरानुचरितं नानारत्नसमाकुलम् ।
विषोल्वणैर्भुजङ्गैश्च दीप्तजिह्वैर्निषेवितम् ॥३४॥
क्वचित् कनकसंकाशं क्वचिद् रजतसन्निभम् ।
क्वचिदञ्जनपुञ्जाभं हैमवन्तमुपागमत् ॥३५॥
स तु तत्र नरश्रेष्ठस्तपो घोरं समास्थितः ।
फलमूलाम्बुसंभक्षः सहस्रं परिवत्सरान् ॥३६॥
संवत्सरसहस्रे तु गते दिव्या महानदी ।
दर्शयामास तं गङ्गा तदा मूर्तिमती स्वयम् ॥३७॥

---

२९d : °व्याघ्र° A
३०b : कूजन्ति F
३१d : after it ३५ab has been repeated in D
३३d : समन्तात् A
३५c : °पुण्याभं AD
३६a : °श्रेष्ठ: B
३६b : समाश्रितः C
३७b : दिव्ये CeFGH

गङ्गोवाच

किमिच्छसि महाराज मत्तः किं च ददानि ते ।
तन्मे ब्रूहि नरश्रेष्ठ करिष्यामि वचस्तव ॥३८॥
एवमुक्तः प्रत्युवाच राजा हैमवतीं तदा ।
पितामहा मे वरदे कपिलेन महानदि ॥३९॥
अन्वेषमाणास्तुरगं दग्धाः संरम्भवह्निना ।
तानि षष्ठिसहस्राणि सागराणां महौजसाम् ॥४०॥
स्वर्गे वासं न लब्धानि त्वत्तोयस्पर्शनं विना ।
तावत् तेषां गतिर्नास्ति ब्रह्मदण्डहतात्मनाम् ।
न यावत् त्वज्जलस्पर्शो भविष्यति महानदि ॥४१॥

शेष उवाच

एतच्छ्रुत्वा तु वचनं गङ्गा चाह भगीरथम् ।
त्वत्कामं पूरयिष्यामि मा शुचो राजपुत्रक ॥४२॥
किन्तु वेगं महाराज मम को धारयिष्यति ।
वेगेन पृथिवीं भित्वाऽन्यथा यास्ये रसातलम् ॥४३॥
तं च धारयितुं शक्तो नीलकण्ठो न चापरः ।
तं तोषयाशुतोषं वै तपसा वरदं वरम् ॥४४॥
स हि मां प्रच्युतां देवः शिरसा धारयिष्यति ।
स करिष्यति ते काममाशुतोषो वृषध्वजः ॥४५॥
एवमुक्तः स देव्या तु महाराजो भगीरथः ।
कैलासं गिरिमासाद्य तोषयामास शंकरम् ॥४६॥

---

३९d : कापिलेन CeGH
४२a : एतत् श्रुत्वा A
४२b : प्राह G
४३d : महीतलम H

तपसा महता विप्र कालयोगेन केनचित् ।
स वरं तु ददौ तस्मै गङ्गाया धारणं शिवः ॥४७॥
धारयिष्ये महाराज गगनात् प्रच्युतां शिवाम् ।
दिव्यां देवनदीं पुण्यां त्वत्कृते नृपसत्तम ॥४८॥
एवमुक्त्वा महादेवो हिमवन्तमुपागमत् ।
वृतः स पार्श्वदैर्घोरैर्नानाप्रहरणोद्यतैः ॥४९॥
तत्र स्थित्वा महादेवो भगीरथमुवाच ह ।
आनयस्व महाराज गङ्गां वेगवतीं नदीम् ॥५०॥
पतमानां च तां देवीं धारयिष्ये प्रवेगिनीम् ।
एतच्छ्रुत्वा वचो राजा महेशेन समीरितम् ॥५१॥
प्रयतश्चिन्तयामास गङ्गां देवनदीं द्विज ।
ततः सा चिन्त्यमानैव गङ्गा भगीरथेन वै ॥५२॥
ईशानं च स्थितं दृष्ट्वा गगनान् निपपात ह ।
तां प्रच्युतामथो दृष्ट्वा देवाः सार्धं महर्षिभिः ॥५३॥
गन्धर्वोरगयक्षाश्च समाजग्मुर्दिदृक्षवः ।
ततः पपात गगनाद् गङ्गा हिमवतः सुता ॥५४॥
समुद्धूता महावर्ता ग्राहमीनसमाकुला ।
दधार तां हरः स्मित्वा गङ्गां वेगेन दुर्धराम् ॥५५॥
ललाटदेशे पतितां मालतीदामसंनिभाम् ।
फेनपुञ्जाकुलजलां हंसानामिव पङ्क्तयः ॥५६॥
क्वचिदाभोगकुटिला प्रस्खलन्ती क्वचित् क्वचित् ।
जटासु विचरन्त्यस्य देवदेवस्य सा नदी ॥५७॥

---

४९c : पार्षदै : A
५१a : पतमान° AC
५१c : ततो (for वचो) A
५३a : चास्थितं G
५५a : समुद्धत° H

न निर्गमपथं प्राप तमाह च भगीरथः ।
भगवन् देहि मे गङ्गां पृथिवीमवतारय ॥५८॥
यत्र मे पितरो दग्धाः कपिलेन महात्मना ।
ततः स कृपयाविष्टो भित्त्वा किञ्चिज्जटाञ्चलम् ॥५९॥
मुमोच गङ्गां सा तस्मात् प्रविष्टाऽभूद्धिमालयम् ।
गुहायां परिबभ्राम निर्गमं नान्वविन्दत ॥६०॥
ततो भगीरथः प्राह मातः किं कुरुषे चिरम् ।
निर्गच्छस्व गुहायास्त्वं पितॄनुद्धर मामकान् ॥६१॥
सा तमाह महाभाग गुहां निर्भिद्य पैतृकीम् ।
नहि गन्तुं समर्थाऽहं तदुपायं विचिन्तय ॥६२॥
ऐरावतं गजं गत्वा तमेवात्र नियोजय ।
दन्तेन गह्वरं भित्त्वा स मां निर्यापयिष्यति ॥६३॥
तच्छ्रुत्वा स महाभाग गजमैरावतं ययौ ।
तं च सन्तोषयामास स उवाच वरं वृणु ॥६४॥
तमाह राजन् एतेन गुहां हैमवतीं भवान् ।
विदारयतु दन्तेन गङ्गा यास्यति भूतलम् ॥६५॥
स चाह गङ्गा मह्यं चेद् दद्यादालिङ्गनं नृप ।
विदारयामि दन्तेन तदा हैमवतीं गुहाम् ॥६६॥
तच्छ्रुत्वा स पुनर्गत्वा गङ्गामाह करीरितम् ।
गङ्गाह तं भवान् गत्वा ब्रवीतु यदि मे करी ॥६७॥
सोढुं शक्नोति भङ्गांस्त्रीन् तत् तथैव भविष्यति ।
पुनरैरावतं गत्वा तं तथाह भगीरथः ॥६८॥

---

६०b : द्धिमाचलं H
६४a : महाभागो A
६४d : उवाच स A
६५a : राजदन्तेन FG
६८a : शृङ्गांश्च C

स तथेति प्रतिश्रुत्य गुहां हैमवतीमगात् ।
गुहां बिभेद दन्तेन स करी मदविह्वलः ॥६९॥
प्रतीक्षमाणो भङ्गांस्त्रीनास्ते कामवशं गतः ।
दन्तेन गिरिमालम्ब्य करेण च महीतलम् ॥७०॥
आसीत् सुस्थिरदेहोऽसौ सुरहस्ती मदाविलः ।
निर्जगाम तदा गङ्गा भङ्गेनाप्लावयद् गजम् ॥७१॥
प्रथमेन तरङ्गेण गतोऽसौ दशयोजनम् ।
द्वितीयेन योजनानां शतं प्राप महाकरी ॥७२॥
तृतीयेन महाभाग प्लाव्यमानो महागजः ।
विभग्नगात्रो न्यपतत् प्रमीत इव दुर्बलः ॥७३॥
योजनानां सहस्रं तु प्राप्य तस्थौ मृतो यथा ।
तां स्तुवन् बहुधा विप्र क्षमस्वेति वदन् मुहुः ॥७४॥
अनुज्ञाप्य ययौ गङ्गां स गजस्त्रिदशालयम् ।
स उत्तस्थौ गजो भीतो यत्र तद्धस्तिनापुरम् ।
नाम्नाऽभवन् महाभाग पुरं पूरुनिवासभूः ॥७५॥
ततः प्रतस्थे सा देवी भगीरथपुरःसरा ।
सन्दर्शितेन तेनैव यथा भुवनपावनी ॥७६॥
अथ जह्नुर्महाराजस्तपस्यन् पथि धार्मिकः ।
ददर्श प्लावितं सर्वं निजोपकरणं द्विज ॥७७॥
तरङ्गेण हृतं सर्वं कुशपुष्पसमिद्धविः ।
चुकोप केऽयं दुर्मेधा अवजानाति मां नदी ॥७८॥
इत्युक्त्वा स महाभाग गण्डूषीकृत्य भूमिपः ।
पपौ गङ्गां सतरङ्गां मीननक्रादिसंकुलाम् ॥७९॥

---

७१c : ततो F
७३c : प्रभग्न° C
७३d : प्रणीत H

दृष्ट्वा भगीरथो राजा पीतां गङ्गां महीभृता ।
तुष्टाव तं प्रभावज्ञः कृतपाणिपुटाञ्जलिः ॥८०॥
देहि गङ्गां महाराज पितॄणां मम पावनीम् ।
न जानामि प्रभावं ते ह्यवज्ञातोऽसि तेन मे ॥८१॥
इत्युक्तो जह्नुरूचेऽथ तनयस्तु महानदी ।
ममेति जगती ख्याता यातु गङ्गा ममोदरात् ॥८२॥
उदरस्थाऽपि गङ्गाह तथैवेति ततो नृपः ।
बिभेद जठरं विप्र कुशाग्रेण तपोनिधिः ॥८३॥
निर्गता तेन मार्गेण जाह्नवीति परिश्रुता ।
पृथिवीतलमासाद्य भगीरथमथाब्रवीत् ॥८४॥
दर्शयस्व महाभाग मार्गं केन व्रजाम्यहम् ।
तवाहं तनया राजन् नाम्ना भागीरथी ततः ॥८५॥
पूरयिष्यामि ते कामं क्व ते दग्धाः पितामहाः ।
एतच्छ्रुत्वा ततो राजा प्रातिष्ठत भगीरथः ॥८६॥
यत्र तानि शरीराणि सागराणां महात्मनाम् ।
प्लावनार्थं द्विजश्रेष्ठ पुण्येन सलिलेन ह ॥८७॥
आसीच्छतमुखी नाम गङ्गा तत्र द्विजर्षभ ।
यत्र मे निहताः सर्वे कपिलेन महौजसा ॥८८॥

---

८२b : तनयास्तु GH
८३c : भूप C
७५b-७६ : not found in G
८४a : निर्गतानेन G
८४b : परिश्रुतं C
८५a : महाराज C
८७c : पावनार्थं C
८७d : शरीरेण F
८८c : ते G
८८d : कापिलेन F

भस्ममात्रावशेषास्ते गङ्गाम्भः प्राप्य पावनम्
प्राप्य तेजोमयं रूपं विमानेन सुवर्चसा ॥८९॥
ययुरम्बरमार्गेण प्रशंसन्तो भगीरथम् ।
सगरस्यात्मजा विप्र तज्जलस्पर्शमात्रतः ॥९०॥
भगीरथोऽपि पुण्यात्मा प्रहृष्टवदनाम्बुजः ।
पितॄणां चोदकं तत्र ददौ पूर्णमनोरथः ॥९१॥
समुद्रोऽपि पुरा पीतो मुनिना कुम्भजन्मना ।
गङ्गाम्भसैव पूर्णोऽभूत् यथा पूर्वं द्विजर्षभ ॥९२॥
एतत् ते सर्वमाख्यातं यथा राजा भगीरथः ।
गङ्गावतरणं चक्रे पितॄणां पावनाय वै ॥९३॥
सैषा भागीरथी पुण्या महापातकनाशिनी ।
प्रसङ्गेनापि विप्रेन्द्र नाम्नाऽपि जनपावनी ॥९४॥
नास्ति विष्णुसमो देवो नास्ति काशीसमा पुरी ।
नास्ति गङ्गासमं तीर्थं नास्ति विप्रसमोऽतिथिः ॥९५॥

इति श्रीपद्मपुराणे स्वर्गखण्डे गङ्गावतरणं षोडशोऽध्यायः ॥१६॥

---

९१b : °वदनो द्विज C
९१d : पुण्य° e
९१c-९३b : not found in F
९२a-९३b : not found in A
पुष्पिका : इत्यादिमहापुराणे पाद्मे A
गङ्गावतरणं नाम AF

# १७

शेष उवाच

धुन्धुमारस्तु यः प्रोक्तः सभायां बलवद्‌द्विषः ।
कथयाम्यस्य चरितं विप्र पापभयापहम् ॥१॥
धर्मिष्ठमिदमाख्यानं धुन्धुमारस्य तच्छृणु ।
महर्षिर्विश्रुतस्तात उतङ्क इति नामतः ॥२॥
मरुधन्वषु रम्येषु आश्रमस्तस्य मारिष ।
उतङ्कस्तु महाभाग तपस्तेपे सुदुश्चरम् ॥३॥
आविराधयिषुर्विष्णुं बहून् वर्षगणान् मुनिः ।
तस्य प्रीतोऽथ भगवान् दर्शयामास केशवः ।
महर्षिर्विष्णुमालोक्य तुष्टाव विविधैः स्तवैः ॥४॥

उतङ्क उवाच

त्वया देव प्रजाः सर्वाः सासुराः सुरमानवाः ।
निर्मिता जगतां धातस्त्वां कः स्तोतुं क्षमो नरः ॥५॥
नभः शिरस्ते देवेश नेत्रे शशिदिवाकरौ ।
पवनस्तव निश्वासो वह्निस्तेजस्तव प्रभो ॥६॥
दिशो भुजस्ते कुक्षिस्तु समुद्रो नाभिरम्बरम् ।
पृथिवी तवैव चरणौ रोमाण्योषधयस्तव ॥७॥

---

१d : विप्रशाप° AG
 : °भयावहम् C
३a : मरुधन्वेसु CF
४c : तस्मै G
५c : धातः BC

त्वयि तुष्टे जगत्तुष्टं त्वयि क्रुद्धे महद् भयम् ।
भयापहोऽसि भीतानां दुःखहा दुःखिनामसि ।
त्वयि प्रतिष्ठितं सर्वं जगदेतच्चराचरम् ॥८॥
एवं स्तुतो हृषीकेश उतङ्केन महात्मना ।
तमब्रवीन्महाभागप्रीतस्तेऽहं वरं वृणु ॥९॥

उतङ्क उवाच

एष एव वरो देव मया यद् दर्शितो भवान् ।
पुरुषः शाश्वतो दिव्यः स्रष्टा च जगतः प्रभुः ॥१०॥

विष्णुरुवाच

प्रीतस्तवास्मि भक्त्यैष भक्तोऽसि परमो मम ।
अवश्यं हि त्वया ब्रह्मन् मत्तो ग्राह्यो वरो वरः ॥११॥
एवं संछन्द्यमानस्तु स मुनिर्हरिणा स्वयम् ।
कृताञ्जलिर्वरं वव्रे मुकुन्दं प्रणतो द्विज ॥१२॥
यद्येष मे भवान् प्रीतो दातव्यश्च वरो यदि ।
धर्मे सत्ये दमे चैव बुद्धिर्भवतु मे सदा ।
त्वद्भक्तौ च दृढं चेतः प्रकाशयतु लालसाम् ॥१३॥

भगवानुवाच

सर्वमेतत्तवैवास्ति तत् किं दास्यामि ते द्विज ।
अयाचितोऽपि विप्रेन्द्र वर एष हि दीयते ॥१४॥

---

८b : जगद्भयं G
८f: °तत् G
१०b : दर्शितं B
१२a : संछन्द्यमानोऽसौ A
१३c : सत्ये वरे C
: श्रीभगवानुवाच A
१४c : अचिन्त्योऽसि A अचिन्त्यो हि C

प्रतिभास्यति ते योगो येन युक्तो दिवौकसाम् ।
त्रयाणामपि लोकानां महत् कार्यं करिष्यसि ॥१५॥
लोकानां हि विनाशाय धुन्धुर्नाम महासुरः ।
करिष्यति स तेऽनिष्टं तं हनिष्यति यः शृणु ॥१६॥
बृहदश्व इति ख्यातो भविष्यति महीपतिः ।
तस्य पुत्रः शुचिर्दान्तः कुवलाश्व इति श्रुतः ॥१७॥
स मद्बलमुपाश्रित्य धुन्धुमारो भविष्यति ।
एवमुक्त्वा तु तं विष्णुस्तत्रैवान्तरधीयत ॥१८॥
इक्ष्वाकौ संस्थिते विप्र शशादः पृथिवीमिमाम् ।
प्राप्तः परमधर्मात्मा सोऽयोध्यायां नृपोऽभवत् ॥१९॥
शशादस्य तु दायादः ककुत्स्थो नाम वीर्यवान् ।
अनेनाश्चापि काकुत्स्थः पृथुश्चानेनसः सुतः ॥२०॥
विष्टराश्वः पृथोः पुत्रस्तस्मादार्द्रश्च जज्ञिवान् ।
आर्द्रस्य युवनाश्वस्तु श्रावस्तोऽस्यात्मजोऽभवत् ॥२१॥
तस्माच्छ्रावस्तको ज्ञेयः श्रावस्ती येन निर्मिता ।
श्रावस्तस्य तु दायादो बृहदश्वो महाबलः ॥२२॥
बृहदश्वस्य दायादः कुवलाश्व इति स्मृतः ।
कुवलाश्वस्य पुत्राणां सहस्राण्येकविंशतिः ॥२३॥
सर्वे विद्यासु निष्णाता बलवन्तो दुरासदाः ।
कुवलाश्वश्च पितृतो गुणैरभ्यधिकोऽभवत् ॥२४॥

---

१५a : °भास्यन्ति···योगा C
१५d : कर्म C
१८a : त्वद्बलम् A
१९a : राजन् G
२०d : संस्तुतः C
२१a : पृथोः not found in G
२२c : तु not found in C

समये तं पिता राज्ये बृहदश्वोऽभ्यषेचयत् ।
पुत्रसंक्रामितश्रीको बृहदश्वो महीपतिः ।
जगाम तपसे धीमांस्तपोवनममित्रहा ॥२५॥
अथ शुश्राव राजर्षिं तमुतङ्को वनागतम् ।
अभिगम्य महाभाग न्यवारयत तापसः ॥२६॥

उतङ्क उवाच

भवता रक्षणं कार्यं तत् कुरुष्व महीपते ।
त्वत्प्रसादान्निरुद्वेगा भवेम वयमञ्जसा ॥२७॥
त्वया हि पृथिवी राजन् रक्ष्यमाणा महात्मना ।
भविष्यति निरुद्वेगा न वनं गन्तुमर्हसि ॥२८॥
पालनं हि परो धर्मः प्रजानां क्षत्रियस्य च ।
तत् परित्यज्य राजेन्द्र वानप्रस्थ्यं न शोभते ॥२९॥
निरुद्वेगस्तपः कर्तुं न शक्नोमि महीपते ।
आश्रमस्य समीपे मे धुन्धुर्नाम महासुरः ॥३०॥
अन्तर्भूम्यां महाराज वसत्यमितविक्रमः ।
तस्याद्य निधनं कृत्वा वनं गच्छ यथासुखम् ॥३१॥
शेते लोकविनाशाय तपसे कृतमानसः ।
त्रिदशानां च नाशार्थं यत्नं परममास्थितः ॥३२॥
अवध्यो दैवतानां हि दैत्यानां च स रक्षसाम् ।
नागानामथ यक्षाणां गन्धर्वाणामपि ध्रुवम् ॥३३॥
ब्रह्मणस्तु वरं लब्ध्वा दुर्जयो नाकवासिनाम् ।
तं विनाश्य वनं याहि कीर्तिस्ते महती भवेत् ॥३४॥

---

२५e : धीमान् AC
२७a : भवतो H
२९d : वानप्रस्थं AC
३२a : शेते च लोकनाशाय A
३३ab : च सरक्षसां भयानकः C
३४b : लोक° C

अन्तर्भूमौ शयानस्य वालुकापिहितस्य च ।
संवत्सरावसाने तु निश्वासः संप्रवर्तते ।
यदा तदा चलति भूः ससागरवनद्रुमा ।।३५।।
निश्वासभववातेन रज उत्पाद्यते महत् ।
आदित्यपथमाश्रित्य सप्ताहं भूमिकम्पनम् ।।३६।।
सविस्फुलिङ्गं सज्वालं धूममिश्रं सुदारुणम् ।
तेन राजन् न शक्नोमि तस्मिन् स्थातुं स्व आश्रमे ।।३७।।
तं विनाशय राजेन्द्र लोकानां हितवाञ्छया ।
लोकाः सुस्था भविष्यन्ति हते तस्मिन् महासुरे ।।३८।।
त्वमेव तद्विनाशाय शक्तो नान्यो महीपते ।
तेजसा स्वेन तेजस्तं विष्णुराप्याययिष्यति ।।३९।।
वरो मे विष्णुना दत्तो राजन् पूर्वं प्रतुष्यता ।
यस्तं महासुरं घोरं शूरो व्यापादयिष्यति ।।४०।।
तत् तेजस्तावकेनैव तेजसा दीप्तिमाप्स्यति ।
तत् तेजस्त्वं समाधाय वैष्णवं जगतीपते ।।४१।।
तं निसूदय दैत्येन्द्रं सर्वलोकभयंकरम् ।
नहि धुन्धुर्दुरात्मासौ तेजसाल्पेन शक्यते ।।४२।।
तच्छ्रुत्वा बृहदश्वस्तु कृताञ्जलिरथाब्रवीत् ।
न तेऽभिगमनं ब्रह्मन् वृथा भवितुमर्हति ।।४३।।
पुत्रो ममास्ति बलवान् कुवलाश्वो महीपतिः ।
धृतिमान् वीर्यवाञ्छूरो विक्रमेऽप्रतिमो भुवि ।।४४।।

---

३६b : उत्पात्यते A
३७a : विस्फुलिङ्गजज्वालं A
४१a : नाम केनैव B नाम अनेनैव D मामकेनैव CFGH
४२b : not found in G
४३b-४५a : not found in AF
४३b : G adds बृहदश्व उवाच

सर्वमेतत् प्रियं ब्रह्मन् स ते विप्र करिष्यति ।
पुत्रैः परिवृतः सर्वैर्महाबलपराक्रमैः ।
अनुज्ञां मे ददस्वाद्य न्यस्तशस्त्रोऽस्मि साम्प्रतम् ॥४५॥
तथास्त्विति च तेनोक्तो मुनिनाऽमिततेजसा ।
पुत्रं संदिश्य सचिवैः स राजर्षिर्वनं ययौ ॥४६॥

वात्स्यायन उवाच

क एष भगवन् दैत्यो महावीर्यो महाबलः ।
कस्य पुत्रः कस्य नप्ता कथं प्राप वरं तथा ।
एतदिच्छामि भगवन् याथातथ्येन वेदितुम् ॥४७॥

शेष उवाच

एकार्णवे तदा लोके नष्टे स्थावरजङ्गमे ।
सुष्वाप भगवान् विष्णुरप्सु योगं समाश्रितः ॥४८॥
ममैव भोगे महति भगवानच्युतो हरिः ।
स्वपतस्तस्य देवस्य पद्मं सूर्यसमप्रभम् ।
नाभ्या विनिर्गतं दिव्यं तत्र जातः पितामहः ॥४९॥
स्रष्टा लोकगुरुर्ब्रह्मा पद्मे सूर्यसमप्रभः ।
चतुर्वेदश्चतुर्मूर्तिस्तथैव च चतुर्मुखः ॥५०॥
कस्यचित् त्वथ कालस्य दानवौ बलवत्तरौ ।
मधुश्च कैटभश्चैव दृष्टवन्तौ हरिं प्रभुम् ॥५१॥
शयानं शयने दिव्ये मम भोगे महाद्युतिम् ।
बहुयोजनविस्तीर्णे बहुयोजनमायते ॥५२॥
किरीटकौस्तुभधरं पीतवाससमच्युतम् ।
देदीप्यमानं वपुषा तेजोरूपेण मारिष ॥५३॥

---

४७d : प्राप्य CF
४७f : वेदितम् C

विस्मयः सुमहान्जातो मधुकैटभयोस्तदा ।
ब्रह्माणं च ततो दृष्ट्वा वसन्तं पङ्कजोपरि ॥५४॥
भीषयन्तौ महाभाग स्थितौ तत्र दुरासदौ ।
त्रास्यमानस्ततो ब्रह्मा ताभ्यां कम्पसमन्वितः ॥५५॥
कम्पयामास पद्मस्य नालं ब्राह्मणपुंगव ।
ततोऽबुध्यत गोविन्दो ददृशे च महासुरौ ॥५६॥
तावुवाच हरिर्दैत्यौ स्वागतं वां महासुरौ ।
वरं वरयतं मह्यं वरदोऽस्मि महाबलौ ॥५७॥
तावूचतुर्हृषीकेशं महादर्पबलान्वितौ ।
वरं वरय देव त्वमावां ते वरदौ किल ॥५८॥

श्रीभगवानुवाच

प्रतिगृह्णे वरं वीरौ वाञ्छितोऽस्ति वरो मम ।
युवां हि वीर्यसम्पन्नौ न वामस्ति समः पुमान् ।
मम वध्यावुभौ स्यातां युवामिति वरो मम ॥५९॥

मधुकैटभावूचतुः

अनृतं नोक्तपूर्वं नौ स्वैरेष्वपि कदाचन ।
सत्यधर्मरतौ विद्धि त्वमावां पुरुषोत्तम ॥६०॥
धर्मे तपसि दाने च शीलसत्यदमादिषु ।
उपप्लवो महानद्य वर्तते पयसा कृतः ॥६१॥

---

५५d : कल्प° G
५८ : भगवान् उवाच CH
५६a : दैत्यौ H
५६ : दैत्यावूचतुः G
६१a : माने A याने F
६१b : °सत्त्व° D

अवकाशः पृथिव्यां तु यत्रास्ति भगवन् क्वचित् ।
तत्रावां जहि देवेन्द्र वचो नौ नान्यथा यथा ॥६२॥
भगवांस्तदुपश्रुत्य शिरसी दत्तयोस्तयोः ।
अभिनज्जघने न्यस्य चक्रेण कमलेक्षणः ॥६३॥
धुन्धुर्नाम महाभाग तयोः पुत्रोऽतिवीर्यवान् ।
अतिष्ठदेकपादेन तपसि स्थिरमानसः ॥६४॥
तस्मै ब्रह्मा ददौ प्रीतो वरं वव्रे स च प्रभुम् ।
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ॥६५॥
अवध्यो हि भवेयं वै वर एष वृतो मया ।
तथास्त्वित्यब्रवीद् ब्रह्मा स दैत्यः प्रययौ ततः ॥६६॥
विष्णुमेव पितुर्वैरं संस्मरन् स महाबलः ।
विष्णुस्तदुद्यमं वीक्ष्य माययान्तर्हितोऽभवत् ॥६७॥
स देवानथ गन्धर्वान् जित्वा धुन्धुर्महाबलः ।
सर्वान् बबाधे दुष्टात्मा विष्णुमन्वेषयन् स्थितः ॥६८॥
समुद्रे वालुकापूर्णे उद्दालक इति स्मृते ।
आगम्य च स दुष्टात्मा तं देशं भगवत्प्रियम् ॥६९॥
बाधते स्म परं शक्त्या तमुतङ्कं महासुरः ।
अन्तर्भूमिगतस्तत्र वालुकान्तर्हितस्तथा ॥७०॥
मधुकैटभयोः पुत्रो धुन्धुर्भीमपराक्रमः ।
शेते लोकविनाशाय तपोबलमुपाश्रितः ॥७१॥

---

६२b : ययास्ति C
६२c : विप्रेन्द्र e
६२d : भवेत् C
६६a : अवध्योऽहं CeG
६७b : सुमहाबलः eGH
६९a : वालुकाकीर्णे G
७०a : भक्त्या C
७१d : तपोवनम् G

उतङ्कस्याश्रमाभ्याशे निश्वसन् पावकार्चिषः ।
एतस्मिन्नेव काले तु कुवलाश्वो महीपतिः ॥७२॥
उतङ्केन सह प्रायात् सभृत्यबलवाहनः ।
पुत्रैश्च बहुभिः सार्धं साहस्रैररिमर्दनः ॥
कुबलाश्वं महीपालं विष्णुरप्यविशत् तदा ॥७३॥
उतङ्कस्य निदेशेन तस्मिन् राज्ञि समागते ।
सुदुर्धर्षे महाभाग दिवि शब्दो महानभूत् ॥७४॥
एष श्रीमान् नृपो ह्यद्य धुन्धुमारो भविष्यति ।
स्वर्गस्य प्रथितं स्थानं कल्प्यतां महदुज्ज्वलम् ॥७५॥
दिव्यैश्च पुष्पैर्ववृषुर्गन्धर्वाप्सरसां गणाः ।
दुन्दुभयो विनेदुश्च शान्तोऽग्निरभवत् तदा ॥७६॥
वायुः शीतो ववौ विप्र पुष्पिताश्च वनद्रुमाः ।
अन्तरिक्षे विमानानि शतशोऽथ सहस्रशः ॥७७॥
भ्रमन्ति स्म महाभाग सत्कृतानि महात्मभिः ।
कुबलाश्वस्य राजर्षेर्धुन्धुना सह संयुगम् ॥७८॥
द्रष्टुं समागता देवा गन्धर्वाश्च महर्षयः ।
वैष्णवेन तदा राजा तेजसाप्यायितो द्विज ॥७९॥
स गतो नृपतिस्तत्र रुरोध सर्वतो दिशम् ।
पुत्रैर्महाबलैः सर्वैर्नानाप्रहरणान्वितैः ॥८०॥
अर्णवं खानयामास कुद्दालैरभितो नृप ।
कुबलाश्वस्य पुत्रास्ते तस्मिन् वै बालुकार्णवे ।
दिवसैः सप्तभिः खात्वा ददृशुर्धुन्धुमुल्वणम् ॥८१॥
आसीद् घोरं वपुस्तस्य बालुकापिहितं महत् ।
दीप्यमानं स्वतेजोभिर्द्वितीय इव भास्करः ॥८२॥

---

७५c : स्वर्गेऽस्य GH

७७a : वायुश्च A

तदा धुन्धुर्महाभाग पश्चिमां दिशमाश्रयन् ।
सुप्त आसीन् न जानाति तान् वै तत्र समागतान् ॥८३॥
कुवलाश्वस्य ते पुत्रा बाणैरसिभिरिष्टिभिः ।
पट्टिशैर्मुद्गरैः प्रासैर्गदाभिर्मुषलैरपि ॥८४॥
जघ्नुस्तं सर्वतो वृत्वा बुबुधेऽसौ ततोऽसुरः ।
क्रुद्धश्चाभक्षयत् तेषां शस्त्राणि विविधानि सः ॥८५॥
अथास्यात् पावकं दीप्तं वमन् सर्वान् नृपात्मजान् ।
ददाह सुमहावीर्यान् सागरान् कपिलो यथा ।
त्रय एव महाभाग दूरस्था जीवितं दधुः ॥८६॥
तेषु क्रोधाग्निदग्धेषु कुवलाश्वो महीपतिः ।
आससाद महातेजाः कुम्भकर्णमिवापरम् ॥८७॥
ततः सुस्राव दैत्यस्य देहाद् वारि समन्ततः ।
कुवलाश्वः पपौ तच्च वह्निं चाशमयद् भृशम् ॥८८॥
ब्रह्मास्त्रेण च तं दैत्यं ददाह पृथिवीपतिः ।
सोऽस्त्रेण दग्ध्वा राजर्षिः कुवलाश्वो महासुरम् ।
त्रैलोक्यस्याभयं चक्रे देवानां परमं हितम् ॥८९॥
धुन्धोर्वधात् तदा राजा कुवलाश्वो महीपतिः ।
धुन्धुमार इति ख्यातो नाम्नाऽप्रतिरथोऽभवत् ॥९०॥
तमूचुर्विबुधाः प्रीताः सह सर्वैर्महर्षिभिः ।
वरं वृणीष्व राजेन्द्र त्राता धुन्धोर्वधाद् वयम् ॥९१॥

---

८५c : चाभञ्जयत् A
८५d : विविधानि च G
८८d : चाशमयत् D
९०d : नाम्नाप्यति° A
९१a : विविधाः e
९१d : भ्राता G

ततः कृताञ्जलिर्भूप इदं वचनमब्रवीत् ।
दद्यां वित्तं द्विजाग्रेभ्यः शत्रूणां चैव दुर्जयः ॥९२॥
शक्रेण सह सौख्यं च विष्णुभक्तिश्च मेऽस्त्विति ।
धर्मे रतिश्च सततं स्वर्गे वासस्तथाऽक्षयः ॥९३॥
तथास्त्विति ततो देवास्तमूचुश्च महर्षयः ।
एवं प्राप्य वरं राजा शिष्टैः पुत्रैस्त्रिभिः सह ॥९४॥
ऋषिभिश्चापि गन्धर्वैस्तङ्केन च धीमता ।
स्तूयमानो ययौ राज्यं महाबलपराक्रमः ।९५॥
देवाश्चर्षयश्चैव स्वानि स्थानानि भेजिरे ।
स काले जगतीनाथो राज्यं न्यस्य सुतेषु वै ॥९६॥
योगधारणया प्राणान् विमुच्य परमार्थवित् ।
इन्द्रलोकं समासाद्य मोदतेऽद्यापि शक्रवत् ॥९७॥

इति श्रीपद्मपुराणे स्वर्गखण्डे धुन्धुमारोपाख्यानं नाम सप्तदशोऽध्यायः ॥१७॥

---

९३a : सह not found in e

पुष्पिका : श्री not found in C, नाम···ऽध्यायः not found in B, नाम not found in GH, इत्यादि महापुराणे पाद्मे A

# १८

शेष उवाच

अथाख्यास्ये महाभाग शिविरौशीनरो यथा ।
प्राप स्वर्गं महाराज पुण्यात्मा भुवि विश्रुतः ॥१॥
जला चोपजला चैव यमुनामभितो नदी ।
तत्राश्वमेधं राजर्षिः शिविरौशीनरोऽकरोत् ॥२॥
यत्र यज्ञे महाभागा मुनयश्च तपोधनाः ।
पराशरो गालवोऽत्रिर्वसिष्ठो जाजलिस्तथा ॥३॥
पञ्चैते धर्मसहिता ऋत्विजो विजितेन्द्रियाः ।
अन्ये महर्षयः सर्वे सदस्याः सर्वतः स्थिताः ॥४॥
यो यमिच्छति कामं वै शिविः सर्वमपूरयत् ।
नापूर्णकामस्तत्रासीद् यज्ञे तस्य महात्मनः ॥५॥
ग्रामान् रथान् गजानश्वान् कन्या दासीरलंकृताः ।
अददद् ब्राह्मणेभ्योऽसौ धेनूः शतसहस्रशः ॥६॥
सर्वे शशंसुः तं यज्ञं महेन्द्रादतिशायिनम् ।
देवाश्च सर्वे तत्रासन् मूर्तिमन्तः सहाग्नयः ॥७॥
परीक्षमाणस्तद् धर्मं महेन्द्रः श्येनतां गतः ।
कपोतरूपमग्निं च पर्यधावत वेगवान् ॥८॥
ऊरुं राज्ञः समासाद्य कपोतः श्येनजाद् भयात् ।
शरणार्थी महाभाग निनिन्ये भयविह्वलः ॥९॥

---

३a : महाभाग A
५d : कोऽपि तस्य G
७b : अतिशायनं Ce GH
७d : सहस्रशः G
८c : °रूपं not found in e

श्येनो वेगेन धावन् वै शिवेरूरुमुपाश्रितम् ।
दृष्ट्वा कपोतमुद्भ्रम्य राजानमिदमब्रवीत् ॥१०॥
धर्मात्माऽसि महाराज सर्वैरेव त्वमुच्यसे ।
कथं धर्मविरुद्धं वै कर्माचरसि शत्रुहन् ॥११॥
जन्तूनां विविधा राजन्नाहाराः परिकल्पिताः ।
तेन विश्वसृजा सृष्टेः प्रागेव परिमृष्यता ॥१२॥
मनुष्याणां यथा ह्यन्नं देवानाममृतं तथा ।
पशूनां च तृणान्येव व्याघ्रादीनां च जन्तवः ॥१३॥
पक्षिणां च तथाऽऽहारः प्रतिजातिविशेषतः ।
तत्रास्माकं महाराज कपोताद्या निरूपिताः ।
आहारत्वेन तेनैव जीवनार्थं हि वेधसा ॥१४॥
विहितं भक्षणं धात्रा पीड्यमानस्य वै क्षुधा ।
मा रक्षीर्धर्मलोभेन नैतद् धर्मस्य कारणम् ॥१५॥
मम सप्तदिनान्येव क्षुधितस्य गतानि वै ।
निराहारस्य राजेन्द्र तद् भवाननुमोद्यताम् ॥१६॥

शिविरुवाच

त्रासितोऽयं त्वया पक्षी मामेष शरणं गतः ।
शरणागतमेनं हि कथं त्यक्ष्ये भयान्वितम् ॥१७॥
एतस्य रक्षणे धर्मं महान्तं किं न पश्यसि ।
प्रस्पन्दमानः संभ्रान्तः कपोतः श्येन ज्ञायते ॥१८॥
जीवितार्थी ममाभ्याशे तस्य त्यागो विगर्हितः ।

---

१०c : उद्भ्राम्य G
११a : धर्मात्मा च A
१७b : एव G
१८b : नु A
१८d : जायते FH दृश्यते C

यत् पापं ब्रह्महत्यायां दोग्ध्रीं हत्वा च यद् भवेत् ।
शरणागतसंत्यागे तदेव पातकं नृणाम् ॥१९॥

श्येन उवाच

आहारात् सर्वभूतानि प्रभवन्ति महीपते ।
आहारेणैव वर्धन्ते आहारैः प्राणधारणम् ॥२०॥
स्रक्चन्दनानुलेपाद्यैर्वमनाभरणादिभिः ।
न जीवो रक्षितुं शक्यो विनाऽऽहारेण पार्थिव ॥२१॥
आहारेण विना प्राणा मम यास्यन्ति सम्प्रति ।
मां विना मम ये दाराः पुत्राश्च पितरौ तथा ॥२२॥
सर्वे प्राणान् विमोक्ष्यन्ति विनाऽऽहारेण भूमिप ।
एकं कपोतं रक्षंस्त्वं हंसि प्राणान् बहूनपि ॥२३॥
धर्मार्थमपि यत् कर्म धर्मानन्यान् प्रपीडयेत् ।
न स धर्म इति प्रोक्तो विधर्मः स महीपते ॥२४॥
अविरोधेन यो धर्म उत्तमः स हि कीर्तितः ।
विरोधिषु महीपाल विचार्य गुरुलाघवम् ।
बाधा न यत्र दृश्येत तं धर्मं समुपाचरेत् ॥२५॥
गुरुलाघवविज्ञानं धर्माधर्मेषु शस्यते ।
यतो भूयांस्ततो राजन् वर्तितव्यं भवादृशैः ॥२६॥

राजोवाच

बहुकल्याणसंयुक्तं भाषसे वचनं खग ।
सुपर्णः पक्षिराजस्त्वं नान्यो भवितुमर्हसि ॥२७॥

---

२०d : आहारात् G
२१c : वर्धितुं A
२१d : भूमिप C
२३c : रक्षार्थं G
२३d : असि CeFGH
२५b : उच्यते AF
२५e : बाधो AeFGH

तथाहि ते वचः सौम्य धर्मसन्तानसंयुतम् ।
धर्मज्ञोऽसि महाभाग न तेऽस्त्यविदितं क्वचित् ।
शरणागतसंत्यागं कथं वह्वभिमन्यसे ॥२८॥
आहारार्थं समारम्भो यदि तेऽयं विहङ्गम ।
शक्यः कर्तुं मया सोऽपि वहुधैव तवाधुना ॥२९॥
गोवृषो वा वराहो वा मृगो वा महिषोऽपि वा ।
यं यं कामयसे पक्षिन् तं ते संपादयाम्यहम् ।
नैनं त्यक्तुमहं शक्ष्ये भयेन शरणागतम् ॥३०॥

श्येन उवाच

न वराहं वृषं वापि न मृगान् महिषानथ ।
भक्षयामि महाराज किं तैर्मे ये त्वदीरिताः ॥३१॥
विधात्रा विहितो भक्ष्यः कपोतः क्षत्रियर्षभ ।
तं विहायाहममृतमपि भक्ष्यं न कामये ॥३२॥
तमुत्सृज महीपाल विधिना कल्पितं मम ।
श्येनः कपोतमत्तीति को न जानाति भूतले ॥३३॥

राजोवाच

राष्ट्रं शिवीनामृद्धं वै ददामि तव खेचर ।
यं च कामयसे कामं श्येन सर्वं ददामि ते ॥३४॥
विनेमं पक्षिणं भीतं शरणार्थिनमागतम् ।
येन कामेन ते पक्षिंस्त्याज्योऽयं हि कपोतकः ।
तद् वदस्व ददाम्येव तं कामं न कपोतकम् ॥३५॥

---

२९b : विहङ्गमः D
२९d : बहुधैव AF
३०e : शक्ये AC
३३d : के न जानन्ति F
३५ef : not found in C

श्येन उवाच

महाराज कपोते ते यदि स्नेहोऽधिको भवेत् ।
आत्मनो मांसमुत्कृत्य कपोतेन तुलार्पितम् ॥
समं कृत्वा ददस्वाद्य तेन तृप्तिर्भवेन्मम ॥३६॥

राजोवाच

अनुग्रहमिमं मन्ये श्येन यन्माऽभिभाषसे ।
दास्यामि मांसं देहस्य कपोतेन तुलाधृतम् ॥३७॥

शेष उवाच

अथ मांसं स्वमुत्कृत्य राजा परमधार्मिकः ।
तुलयामास तुलया कपोतेन समं द्विज ॥३८॥
दीयमाने ततो मांसे गात्रादुत्कृत्य भूभृता ।
अतिरिक्तः कपोतोऽभूद् भूयो मांसमदान्नृपः ॥३९॥
न पर्याप्तं यदा मांसं कपोतेन समं द्विज ।
निर्मांसोऽथ स भूपाल आरुरोह स्वयं तुलाम् ॥४०॥

श्येन उवाच

मा कार्षीः साहसं राजन्निन्द्रोऽहं समुपागतः ।
परीक्षितुं त्वां धर्मेषु कपोतोऽग्निरयं स्वयम् ॥४१॥
यदुत्कृत्य स्वमांसानि त्वया दत्तानि भूपते ।
एषा ते महती कीर्तिर्लोकानभिभविष्यति ॥४२॥
यावल्लोके मनुष्यास्तत् कथयिष्यन्ति पार्थिव ।
तावत्कीर्तिश्च वासश्च त्रिदिवे ते भविष्यति ॥४३॥
देहश्च ते महाराज नीरुजः प्रकृतो भवेत् ।

---

३७d : तुलावृतम् C
३८a : समुत्कृत्य ADFGH
३९a–४०b : not found in AF
३९c : ऽभूत् BH
४० : शेष (for श्येन) e

इत्युक्त्वा स महीपालमारुरोह दिवं पुनः ॥४४॥
अग्निः कपोतरूपं च विहाय नृपमब्रवीत् ।
साधु साधु महाराज कीर्तिस्ते विपुला भुवि ॥४५॥
कृपालुस्त्वत्समो राजा न भूतो न भविष्यति ।
इत्युक्त्वान्तर्दधे विप्र राजापि कृतवान् क्रतुम् ॥४६॥
समाप्तयज्ञो नृपतिः स्वपुरं प्रतिजग्मिवान् ।
उपविष्टः स राजर्षिः कश्चिद् ब्राह्मणमागतम् ॥४७॥
दृष्ट्वा दरिद्रं क्षीणं च विम्लानं कुपटावृतम् ।
देहि देहीति याचन्तं पप्रच्छ पुरतः स्थितम् ॥४८॥
किमिच्छसि द्विज त्वं हि निर्भयो वद मां प्रति ।
यदिच्छसि तदेवाहं ददामि तव तुष्टये ॥४९॥

ब्राह्मण उवाच

क्षुधितोऽहं महाराज भोक्तुमिच्छामि साम्प्रतम् ।
जानीहि मां सदा त्वं हि संप्राप्तं ब्रह्मराक्षसम् ॥५०॥
लालसा महती जाता तव दृष्ट्वा सुतं नृप ।
नवयौवनसम्पन्नं रूपेणाप्रतिमं भुवि ॥५१॥
तं निहत्य स्वयं राजन् खड्गेन निशितेन वै ।
संस्कृत्य चात्मना मह्यं भक्ष्यं देहि महीपते ॥५२॥
राजा तु तत् प्रतिश्रुत्याविचार्यैवाब्रवीद् द्विजम् ।
तथा करोमि ते ब्रह्मन्नातिथ्यं तव मद्गृहे ॥५३॥
द्विजस्त्वाह कुरुष्व त्वं यन्मदर्थं प्रतिश्रुतम् ।
माध्याह्निकाय गच्छामि नदीं निकटवाहिनीम् ॥५४॥

---

४६c : देवि D
४६d : राजा चापि D
४८b : सम्प्रति C
५३a : परिश्रुत्या° G

इत्युक्त्वा स गतो विप्रो राजापि तनयं ततः ।
असिनाऽऽहत्य संस्कारं स्वयमेव चकार ह ॥५५॥
यदा नायाद् द्विजः सोऽपि तदा व्यग्रो महीपतिः ।
शिरसाऽऽदाय तद् भक्ष्यं नदीतीरे जगाम ह ॥५६॥
तत्रान्वेष्य द्विजं तं च भ्रमति स्म नदीतटे ।
तावद् दूतः समागत्य तमाह नृपतिं द्विज ॥५७॥
राजन् स एव विप्रस्ते योऽसौ ब्राह्मणराक्षसः ।
पुरं दहति दीप्तेन वह्निना ज्वालमालिना ॥५८॥
दग्धं प्राप्तं पुरं सर्वं यथारुचि तथा कुरु ।
तच्छ्रुत्वा स नृपो विप्र तथैव शिरसा वहन् ॥५९॥
संस्कृतं मांसमस्यैव तृप्त्यर्थं पुरमागमत् ।
तं द्विजं समुपागम्य जगाद कृपणं वचः ॥६०॥
कथं क्रुद्धोऽसि भगवन्नेतत्ते भक्ष्यमुत्तमम् ।
यथोक्तमेव संपन्नं भुङ्क्ष्व कालात्ययोऽस्तु न ॥६१॥
तच्छ्रुत्वा स द्विजः प्राह श्रद्धा ते ह्यतिथौ पुरा ।
ब्राह्मणे सुतरां राजन् मद्वचः पालयाधुना ॥६२॥
इदं यत् संस्कृतं मांसं तद् भुङ्क्ष्व स्वयमेव हि ।
तेन मे विपुला प्रीतिस्तृप्तिश्च किल शाश्वती ॥६३॥
इत्युक्तः स तथा कर्तुं प्रवृत्तोऽसौ यदा नृपः ।
तदा स ब्राह्मणो हस्तं जग्राह च जगाद च ॥६४॥

---

५५c : असिनाऽऽकृत्य H
५६c : शिरसा धारयद् A
५७c : भूतः CD
५८a : स not found in D
५९a : दग्धप्रायं CDG दग्धं प्रायं H
५९c : तत् श्रुत्वा CeFH
६२a : तत् श्रुत्वा CeFH
६४b : यथा D

अहं प्रजापतिर्ब्रह्मा त्वामायातः परीक्षितुम् ।
सिद्धोऽसि परमोदारः स्वर्गे वासस्तवाक्षयः ॥६५॥
पुरं च पश्य सकलं हाटकेन विनिर्मितम् ।
इत्युक्तवति तस्मिन् वै देवदेवे जगत्पतौ ॥६६॥
आजगाम स एवास्य कुमारो यौवनान्वितः ।
ववन्दे पितरं तं च ब्राह्मणं च पुरः स्थितम् ॥६७॥
अन्तर्दधेऽथ भगवान् ब्रह्मा विश्वसृजां पतिः ।
स राजा तनये न्यस्य राज्यं वनं गतः स्वयम् ।
भौतिकं देहमुत्सृज्य जगाम त्रिदशालयम् ॥६८॥

इति श्रीपद्मपुराणे स्वर्गखण्डे शिबिस्वर्गारोहणमष्टादशोऽध्यायः ॥१८॥

---

६५b : परीक्षितं G
६५c : सिद्धोऽपि G
६६c : उक्त्वा तं G
६७d : ब्रह्माणं A
: पुरतः स्थितम् C
पुष्पिका : इत्यादिमहापुराणे पाद्मे AF

## १६

शेष उवाच

यच्चोक्तस्ते मरुत्तस्तु स्वर्गगामी नराधिपः ।
तस्यैव चरितं वक्ष्ये शृणु वत्स महाफलम् ॥१॥
असुराश्च सुराश्चैव दक्षस्यासन् प्रजापतेः ।
अपत्यं बहुलं तात तेऽस्पर्धन्त परस्परम् ॥२॥
तथैवाङ्गिरसः पुत्रौ व्रततुल्यौ बभूवतुः ।
बृहस्पतिर्महातेजाः संवर्तश्च तपोधनः ॥३॥
तावतिस्पर्धिनौ ब्रह्मन् पृथगास्तां परस्परम् ।
बृहस्पतिस्तु संवर्तं बाधते स्म पुनः पुनः ॥४॥
बाध्यमानश्च सततं भ्रात्रा ज्येष्ठेन मारिष ।
सर्वं विसृज्य गार्हस्थ्यं दिग्वासा वनमागमत् ॥५॥
मघवाप्यसुरान् जित्वा स्वर्गे राज्यमवाप्य च ।
इन्द्रत्वं प्राप्य लोकेषु स्वयं वव्रे पुरोहितम् ॥६॥
बृहस्पतिं चाङ्गिरसो ज्येष्ठं पुत्रं तपोधनम् ।
याज्यस्त्वङ्गिरसः पूर्वमासीद् राजा करन्धमः ॥७॥
वीर्येणाप्रतिमो लोके वृत्तेन च बलेन च ।
शतक्रतुरिवौजस्वी धर्मात्मा संशितव्रतः ॥८॥
वाहनं यस्य योधाश्च मित्राणि विविधानि च ।
शयनानि च मुख्यानि महार्हाणि च सर्वशः ॥९॥

---

१a : तु CD
१b : नराधिप A
३a-४b : not found in G
४a : अभि° Ce
४c : च AF
८b : वित्तेन A

ध्यानेनैवाभवन् तस्य प्रभावेन च मारिष ।
स गुणैर्भूपतीन् सर्वानतिचक्राम पार्थिवः ॥१०॥
संजीव्य कालमिष्टं च सशरीरो दिवं गतः ।
बभूव तस्य पुत्रस्तु ययातिरिव धर्मवित् ॥११॥
अविक्षिन् नाम मेधावी सर्वराजाधिपो नरः ।
विक्रमेण गुणैश्चैव पितेवासीत् स पार्थिवः ॥१२॥
तस्य वासवतुल्योऽभून्मरुत्तो नाम वीर्यवान् ।
पुत्रस्तमनुरक्ताऽभूत् पृथ्वी सागरमेखला ॥१३॥
वासवोऽपि मरुत्तेन पस्पर्धे द्विजसत्तम ।
शुचिः सर्वगुणोपेतो मरुत्तः पृथिवीपतिः ॥१४॥
परमेणापि यत्नेन न यं शक्रो व्यशेषयत् ।
अशक्नुवन् विशेषाय समाहूय बृहस्पतिम् ।
उवाच देवैः सहितो वचनं हरिवाहनः ॥१५॥
आङ्गिरस महाभाग मरुत्तस्य कथंचन ।
दैवं कर्म तथा पैत्रं मा कार्षीर्मत्प्रियेच्छया ॥१६॥
त्रिलोकेष्वहमेवैको देवराजो बृहस्पते ।
मरुत्तस्तु महीपालो नराणामेव यद् भुवि ॥१७॥
याजयित्वा कथं मां तु त्वममर्त्यं महेश्वरम् ।
याजयेर्मृत्युवशगं मरुत्तं मर्त्यमप्युत ॥१८॥
मां वा वृणुष्व याज्यं वै मरुत्तं वा न तूभयम् ।
परित्यज्य मरुत्तं वा यथाजोषं भजस्व माम् ॥१९॥
एवमुक्तः स धर्मज्ञो देवराजेण गीष्पतिः ।
ध्यात्वा मुहूर्तं विमना देवराजं वचोऽब्रवीत् ॥२०॥

---

१०a : °भवत् FH
१६c : पित्र्यं GH
१८a : च D
१९d : °योषं B
२०a : धर्मज्ञ BG

त्वं भूतानामधिपतिस्त्वयि लोकाः प्रतिष्ठिताः ।
नमुचेर्विश्वरूपस्य निहन्ता त्वं बलस्य च ॥२१॥
देवस्त्वं सर्वदेवानामेक एव पतिः परः ।
त्वं बिभर्षि सुरान् सर्वान् भुवं द्यां च महाबल ॥२२॥
पौरोहित्यं कथं कृत्वा तव देवगणाधिप ।
याजयेयमहं मर्त्यं मरुत्तं पाकशासन ॥२३॥
समाश्वसिहि देवेन्द्र नाहं मर्त्यस्य कर्हिचित् ।
ग्रहीष्यामि स्रुवं यज्ञे शृणु चेदं वचो मम ॥२४॥
वह्निः शीतलतां गच्छेन्मेदिनी परिवर्तते ।
रविर्भासं त्यजेच्चापि न तु सत्यादहं चले ॥२५॥

शेष उवाच

बृहस्पतिवचः श्रुत्वा शक्रो विगतमत्सरः ।
प्रशस्यैनं प्रविवेश स्वमेव भवनं हरिः ॥२६॥
देवराजस्य समयं कृतमाङ्गिरसेन तु ।
श्रुत्वा मरुत्तो नृपतिर्यज्ञमाहारयत् परम् ॥२७॥
संकल्प्य मनसा यज्ञं करन्धमसुतात्मजः ।
बृहस्पतिमुपागम्य वाग्मी वचनमब्रवीत् ॥२८॥
भगवन् यन्मया पूर्वमभिगम्य तपोधन ।
कृतोऽभिसन्धिर्यज्ञाय भवतो वचनाद् गुरो ॥२९॥
तमहं यष्टुमिच्छामि संभाराः संभृताश्च मे ।
याज्योऽस्मि भवता धीमन् भवान् कुलपुरोहितः ॥३०॥

---

२४c : श्रुवं B
२५a : गच्छेत् eFH
२५d : न हि A
२९d : वचनात् D
३०b : ये AH
३०c : भवतो H

बृहस्पतिरुवाच

न कामये याजयितुं भवन्तं मर्त्यधर्मिणम् ।
अमर्त्यराजेन वृतः प्रत्यजानां पुरा नृप ॥३१॥

मरुत्त उवाच

पितामहेन पित्रा च वृतस्त्वं पूर्वमेव हि ।
तव क्षेत्रं महाभाग कथं त्वं त्यक्तुमर्हसि ॥३२॥

बृहस्पतिरुवाच

देवेन्द्रं याजयित्वाऽहं याजयिष्ये कथं नरम् ।
भूपते गच्छ वा मा वा निवृत्तोऽस्म्यन्ययाजनात् ।
न त्वां याजयितास्म्यद्य वृणुष्व त्वं यमिच्छसि ॥३३॥

शेष उवाच

एवमुक्तस्तु नृपतिर्व्रीडितो गृहमागमत् ।
गच्छन् पथि ददर्शाथ नारदं मुनिसत्तमम् ॥३४॥
विधिवत् प्राञ्जलिस्तस्थौ ततस्तं नारदोऽब्रवीत् ।
कथं राजन् न पश्यामि तवाहं हर्षलक्षणम् ॥३५॥
कुतो गतोऽसि कस्माद् वा तवाप्रीतिरभून्नृप ।
तद् ब्रवीहि महाराज श्रोतव्यं चेन्मया किल ॥
तवाहं व्यपनेष्यामि निश्चितं दुःखकारणम् ॥३६॥

मरुत्त उवाच

गतोऽस्म्यङ्गिरसः पुत्रं मम पूर्वपुरोहितम् ।
यज्ञार्थम् ऋत्विजं कर्तुं स च मां नाभ्यनन्दत ॥३७॥
प्रत्याख्यातश्च तेनाहं जीवितं नैव धारये ।
परित्यक्तश्च गुरुणा केन दोषेण नारद ॥३८॥

---

३३a : ३१ab repeated before ३३a in e
३६d : चेत् H

नारद उवाच

राजन्नङ्गिरसः पुत्रः संवर्तो नाम धार्मिकः ।
स भ्राम्यति दिशः सर्वा महाप्राज्ञो दिगम्बरः॥३९॥
तमेवगच्छ यज्ञार्थे यदि नेच्छति गीष्पतिः ।
स प्रसन्नो यज्ञमिमं संवर्तः सावयिष्यति ॥४०॥

मरुत्त उवाच

संजीवितोऽहं भवता वचसानेन नारद ।
क्व पश्यामि मुनिं तं तु तद् वदस्व महामुने ॥४१॥
स कथं मे प्रसन्नः स्यान्न च मा संपरित्यजेत् ।
स गृह्णाति मां ब्रह्मन् यदि याज्यं मुनिर्मुने ॥
तदाहं जीवितं जह्यामेतज्जानीहि नारद ॥४२॥

नारद उवाच

उन्मत्तरूपो दिग्वासश्चङ्क्रमीति महीतलम् ।
वाराणसीं गतो ह्यद्य द्रष्टुं विश्वेश्वरं प्रभुम् ॥४३॥
तस्य द्वारे महाराज न्यसेथाः कुणपं यदि ।
तं दृष्ट्वा यो निवर्तेत संवर्तः स महीपते ॥४४॥
तं प्रसादय यत्नेन पश्चात् तस्य परिभ्रमन् ।
एकान्ते प्राप्य तं राजन् प्रार्थये शरणं गतः ॥४५॥
यदि पृच्छेत् स भवन्तं केनास्मि कथितस्त्वयि ।
तदा विज्ञापयेथा मामुपदेष्टारमित्युत ॥४६॥
यदि मामथ सोऽन्वेष्टुं पृच्छेत् त्वां क्व स नारदः ।
ब्रूयास्त्वं नारदो वह्निं प्रविवेशेत्यशङ्कया ॥४७॥

---

४०b : गीःपतिः G
४१a : भवतो D
४२a : प्रेमसम्पन्न. D प्रेमप्रपन्न. G
४५a : एतं प्रसाद्य CH
४७c : त्वं ब्रूयाः FGH

शेष उवाच

स तथेति प्रतिश्रुत्य पूजयित्वा च नारदम् ।
तमामन्त्र्याभ्यनुज्ञातो ययौ वाराणसीं पुरीम् ॥४८॥
तत्र गत्वा तु कुणपं पुर्या द्वारे महायशाः ।
संस्थाप्य सुचिरं तस्थौ प्रतीक्षंस्तं महामुनिम् ॥४९॥
स विप्रैर्बहुभिः सार्धं संवर्तो मुनिपुङ्गवः ।
पुर्या द्वारं समासाद्य निवृत्तोऽभूत् स एकलः ॥५०॥
निवृत्तं तं मुनिं ज्ञात्वा राजा तं पृष्ठतोऽन्वयात् ।
स च तं विजने दृष्ट्वा पांसुभिः कर्दमेन च ।
श्लेष्मणा चैव राजानं ष्ठीवनैश्च समाकिरत् ॥५१॥
स तथा बाध्यमानोऽपि संवर्तेन महीपतिः ।
न तत्याज च तत्पार्श्वमन्वयादेव तं मुनिम् ॥५२॥
ततो निवृत्तः संवर्तः परिश्रान्त उपाविशत् ।
शीतलच्छायमासाद्य न्यग्रोधं बहुशाखकम् ॥५३॥

इति श्रीपद्मपुराणे स्वर्गखण्डे मरुत्तोपाख्याने ऊनविंशतितमोऽध्यायः ॥१९॥

---

५०c : द्वारि G
५०d : एकशः H
५१a : गत्वा AF
५२a : वै (for ऽपि) CeH
पुष्पिकाः इत्यादि महापुराणे पाद्मे A
संवर्तोपाख्याने C G
ऊनविंशो° A

## २०

शेष उवाच

श्रान्तिमपनीय संवर्तः पृथिवीपतिमब्रवीत्।
केनास्मि कथितः सत्यमाख्याहि। ततस्ते प्रियं करिष्यामि।
सत्यं ब्रुवतो मनोरथाः सिद्धिमाप्स्यन्ति।
अन्यथा शिरस्ते शतधा पतिष्यति।

मरुत्त उवाच

नारदेनाख्यातो भवान् मे गुरुपुत्रोऽसि यतो मे कुलगुरुरङ्गिराः।

संवर्त उवाच

स मां जानाति। तदस्तु। स इदानीं क्व वर्तते।

मरुत्त उवाच

स मां त्वदुद्देशमुक्त्वा जातवेदसमाविशत्। तत्कारणमहं न जाने।

संवर्तस्तमब्रवीत्।

बाढमेतदेव ममोद्देश्यं यत् तमहमेव भस्मसात् कुर्यामिति। तदस्तु। भवान् किमर्थमन्वेषयतीत्युक्तो

राजावदत्।

संभृतसंभारोऽहं यागार्थमृत्विजं भवन्तं वरये।

---

३ : केनास्मि ते BH
७ : मे not found in e
१२ : अविशत् DH
१५ : एवं H
१६ : अन्वेषयतीति उक्तो G
१७ : राजा अवदत् A

स तं भर्त्सयन्नुवाच ।

वातुलेन मया स्वचित्तमपि वशमानेतुं न शक्यते । कथं मामुन्मत्तरूपमेव याचितुमर्हसि । ज्यायान् मम यागकर्मणि निपुणो महेन्द्रेण वृतः । तव पितामहेन पित्रा च पूर्वमेव वृतोऽस्ति । तेनैव हि निर्वाहय यागकर्माणि । तथा चोक्तं ।

ऋत्विग्याज्यमदुष्टं यस्त्यजेदनपकारिणम् ।
अदुष्टम् ऋत्विजं याज्यो विनेयौ तावुभावपि ।।

न चाहं तेनाननुज्ञातस्तव यागं कर्तुं व्यवस्यामि । स हि ज्यायान् मद्गुरुरिति तदनुज्ञामादाय भवान् मामागमिष्यति ।

मरुत्त उवाच ।

तमहं पूर्वमेव गत्वा यागार्थमभ्यर्थितवान् । स च मां याज्यं न कामयते । अब्रवीच्च । अहं सुरराजं याजयित्वा न मर्त्यं याजयामीति । शक्रेणापि प्रतिषिद्धोऽसौ मरुत्तं मा याजयेति । ततोऽहं त्वामभ्यर्थये । भवता यागं निष्पाद्य सर्वस्वेनापि व्ययितेन वासवमतिवर्तिष्ये । सोऽहं प्रत्याख्यातो बृहस्पतिं पुनर्गन्तुं नोत्सहे । व्रीडा हि महीयसी तदनुज्ञाप्रार्थनायेति ।

---

२१ : एवं H
२२ : यागकर्मणि निपुणो ज्यायान् मम G
२४ : हि not found in CeFGH
: यागकर्मादि C कर्माणि G
२५ : तादृग्याज्यं G
२७ : यागं ते G
३३ : अतोऽहं G
३५ : पुनर्बृहस्पतिं CeGH

संवर्त उवाच

ध्रुवमस्मि तव शरणम् । मनोरथसिद्धये सर्वम् एव करिष्यामि यदि भवान् सर्वथा मम निदेशवर्ती ममाभिप्रायसाधनाय परमोद्युक्तः स्यात् । मया च याज्यमानं भवन्तं सर्वराजवृन्दातिशायनं दृष्ट्वा बृहस्पतिर्देवराजश्च द्वेषं परममुद्घाटयिष्यतः । तत्र स्थैर्यं यदि बध्नासि न च मां प्रत्याख्यास्यसि एतत् सर्वं निःसंशयं प्रतिजानीहि । अन्यथा भवन्तं कुपितोऽहं भस्मसात् कुर्याम् ।

मरुत्त उवाच

यावत् सविता प्रकाशमादधाति गिरयोऽपि धरणीं धारयन्ति तावन्मम नरके वासो भविष्यति यद्येतं समयमहं लङ्घयामि । अन्यच्च शुभबुद्धिरहितोऽहं कुबुद्धिनिष्ठो विषयशक्तश्च स्यां यद्येषां प्रतिश्रुतिरन्यथा स्यात् ।

संवर्त उवाच

यागे बुद्धिर्दीयताम् । तव सर्वाणि कर्माण्यहं संपादयिष्यामि ।

---

३८ : शरणं not found in G
४० : परमो युक्तः D
४१ : वीक्ष्य G
४३ : बध्नामि G
४४ : इतरथा G
४७ : धरित्रीं G
४८ : भविष्यति not found in AF
: तावन् · · · · भविष्यति not found in H
४९ : एवं AF
: अहं not found in G
५०-५३ : not found in AeF
५१ : प्रतिज्ञा G

हितं च सर्वथा परिचिन्तयामि यथा भवन्तं कोऽपि न परिभवितुं क्षमेत। तव संभारा अपि ममावलोकनेनाक्षया भविष्यन्ति। यागेन च महेन्द्रमप्यभिभविष्यसि। मम तु न धने न चैश्वर्ये नाश्वगजादिषु लालसा। किन्तु ज्यायसो वृहस्पतेर्महेन्द्रस्य च विप्रियमाचरिष्यामि। भवन्तं च शक्रसमतां प्रापयिष्यामि। सर्वथा च तव प्रियमाचरिष्यामि। न चैतन्मद्वचनमन्यथा भवितुमर्हति। किन्तु बहुधनसाध्यमेतं यागं संवर्धयितुं हिमवतः पृष्ठे मुञ्जवन्तं नाम पर्वतमासाद्य तत्र पतितानि बहूनि गण्डशैलतुल्यानि सुवर्णखण्डानि सन्ति। तान्याहर्तुम् अहं त्वया सहैवाभिगच्छामीति। तेन राज्ञा सहैव संवर्तस्तत्र जगाम। तत्र च महाभीमरूपाः खट्वाङ्गमुद्गरासिधनुर्बाणपाणयोऽन्तरीक्षचरा रुद्रपार्श्वदास्तौ रुरुधुः।

---

५४ : संवर्त उवाच/एवं करिष्यामि added before हितं In ABF
५६ : °लोकनाद् अक्षया A
: च not found in GH
५७ : न (before धने) not found in CH
५८ : वृहस्पतेश्च C
५९ : विप्रियं not found in e
: त्वामपि (for भवन्तं) G
: समतां A
६१ : मम वचनं G
६२ : तं added before यागं in e
६३ : नाम not found in C
६४ : गण्ड . . . . तुल्यानि not found in C
६५ : अहं not found in A

संवर्त उवाच

अत्रोमासहितो भगवानपारकारुण्यवारिधिमहेश्वरो नानाविधप्रेतभूतपिशाचकूष्माण्डब्रह्मराक्षसपरिवृतो देवदानवगन्धर्वयक्षकिन्नरमहोरगसुपर्णादिभिरुपस्थीयमानो देवदेवो निवसति। तस्यानुज्ञामन्तरेण दुर्लभोऽत्र सुवर्णलाभः। एते हि तस्यानुचराः सुवर्णरक्षकाः सर्वान् वारयन्ति। तदत्र कृतावधानेन भवता तमाराध्य लब्धव्यानि सुवर्णखण्डानीति विविधैरुपचारैस्तं प्रपूजय। तथेति राजा कृतावधानो भक्तिभावेन भगवन्तं भवानीपतिमाराधयन्नुवाच।

न रूपं शक्यते देव निर्णेतुं केनचित् क्वचित्।
निरीक्षितुं वा देवेश प्राकृतैर्मांसलोचनैः ॥१॥
तस्मै भगवते नित्यं नमः सर्वाय वेधसे।
रुद्राय शितिकण्ठाय पुरुषाय सुवर्चसे ॥२॥
कपर्दिनैकपादाय हर्यक्षणे वरदाय च।
त्र्यक्षाय सर्ववीजाय वामनाय शिवाय च ॥३॥
याम्यायाव्यक्तरूपाय सद्वृत्ते शंकराय च।
हरिनेत्राय मुण्डाय क्रुद्धायोत्तारणाय च ॥४॥

---

७२ : गन्धर्वरक्षोयक्ष° DFGH
७३ : देवदेवो not found in C
७७ : इति not found in A
७८ : पूजय AF
७८-७९ : भक्तिभावेन कृतावधानो G
1–19 not found in A
१b : शक्यते (for निर्णेतुं) BF
: कुत्रचित् (for केनचित्) G
३c : °जीवाय C
after ४b GH add क्षेमाय हरिकेशाय स्थाणवे पुरुषाय च

भास्कराय सुतीर्थाय देवदेवाय रंहसे ।
उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे ॥५॥
गिरिशाय प्रशान्ताय यतये चीरवाससे ।
बिल्वदण्डाय सिद्धाय सर्वदण्डधराय च ॥६॥
मृगव्याधाय महते धन्विनेऽथ भवाय च ।
अजाय कृष्णनेत्राय विरूपाक्षाय ते नमः ॥७॥
वराय सोमवक्त्राय सुवहस्ताय वर्चसे ।
हिरण्यबाहवे तुभ्यमुग्राय पतये नमः ॥८॥
पशूनां पतये चैव भूतानां पतये तथा ।
वृषाय मातृभक्ताय सेनान्ये मध्यमाय च ॥९॥
तीक्ष्णदंष्ट्राय तीक्ष्णाय वैश्वानरमुखाय च ।
विलोहिताय दीप्ताय दीप्ताक्षाय महौजसे ॥१०॥
वसुरेताः सुवपुषे पृथवे कृत्तिवाससे ।
कपालमालिने चैव सुवर्णमुकुटाय च ॥११॥
महाद्युते ह्यनङ्गाय त्र्यम्बकायानघाय च ।
क्रोधनायानृशंसाय मृदवे शूलपाणिने ॥१२॥
दण्डिने तप्ततपसे तथा च क्रूरकर्मणे ।
सहस्रशिरसे चैव सहस्रचरणाय च ॥१३॥

---

५b : वै नमः (for रंहसे) G
६a : गिरीशाय CeG
७b : धन्विने च B
८a : तुभ्यं BF
१०ab : not found in e
१०c : श्रोष्ठाय (for दीप्ताय) C
११a : सुपुरुषे B
१२ab : not found in C
१३ab : not found in e

नमः स्वधास्वरूपाय बहुरूपाय दंष्ट्रिणे ।
नमामि त्वां महात्मानं महायोगिनमव्ययम् ॥१४॥
त्रिपुरघ्नं त्रिनयनं त्रिलोकेशं महौजसम् ।
त्रिशूलपाणिं वरदं त्र्यम्बकं भुवनेश्वरम् ॥१५॥
महेश्वरं विरूपाक्षं त्र्यक्षं पञ्चभुजं शिवम् ।
प्रभवं सर्वभूतानां धारणं धरणीधरम् ॥१६॥
ईशानं शंकरं सर्वं शिवं विश्वेश्वरं गुरुम् ।
उमापतिं विश्वरूपं विश्वेशं विश्वभावनम् ॥१७॥
अनन्तं शाश्वतं देवं त्रिशृङ्गं वृषभेक्षणम् ।
उग्रं स्थाणुं शिवं शम्भुं गौरीशमीश्वरं हरम् ॥१८॥
शितिकण्ठमजं शुक्रं पृथुं पृथुतरं प्रभुम् ।
विश्वरूपं विरूपाक्षं बहुरूपमुमापतिम् ।
शरण्यं शरणं यामि महादेवं चतुर्मुखम् ॥१९॥

तस्यैवं परमभक्तिभावेन स्तुवतः स्वयमाविरासीन्महादेवः । तं विलोक्याविर्भूतं बहुरूपप्रेतभूतादिभिरावृतं संवर्तः स राजा च दण्डवत् प्रणिपातशतेनाराधयामास । तुष्टोऽथ राजानमब्रवीद् देवदेवः किं प्रार्थयते भवानिति ।

राजोवाच

अश्वमेधमाहर्तुमुद्यतोऽहं निर्धनस्तवैतानि मुञ्जवत्पर्वतात् पतितानि गण्डशैलनिभानि

१५d : विश्वेशं विश्वभावनम् D
१ : परम…भावेन not found in e
५ : इह (for इति) A
७ : तवैतत् G तवैतन् CeF
८ : पतितानि तानि गण्ड…निभानि A

सुवर्णखण्डानि प्रार्थये । तानि तवानुचराः परितो रक्षन्ति । अतस्तवानुज्ञामन्तरेण तान्याहर्तुं न वयं शक्नुमः ।

तच्छ्रुत्वा महादेवः यथेष्टमेतानि गृह्यन्तामित्यन्तर्दधे परिकरैः सह भगवान् गिरिजापतिः । इत्यनुज्ञातो भगवता महेश्वरेण स जगदीश्वरः शकटगजोष्ट्रबलीवर्दमानुषैस्तान्याहारयामास स्वपुरीं । ततोऽतिमानुषानि यज्ञभाण्डाद्युपकरणानि सर्वाणि भोजनभाजनानि च निर्माप्य संवर्तदर्शितविधिमार्गानुसारेण राजा हयमेधमारेभे यथा सुरेन्द्रस्यापि यज्ञे न तादृशान्युपकरणान्यासन् । ब्राह्मणादयो वर्णाः सर्वे एव यथाक्रमेण भुञ्जानाः स्वर्णपात्राणि गृहीत्वा ययुः । पुनरन्यानि नवानि प्रतिदिनं आहूयन्ते । जनाः पूर्णमनोरथा अलंबुद्ध्या भाजनानि सुवर्णनिर्मितान्यपि निक्षिप्य निक्षिप्य प्रययुः । एवं प्रववृते तस्य महाराजस्य मरुत्तस्य महायज्ञ इति ।

इति श्रीपद्मपुराणे स्वर्गखण्डे मरुत्तयज्ञारम्भो नाम विंशतितमोऽध्यायः ॥२०॥

---

१३ : सार्धं G

१४ : अभ्यनुज्ञातो CeH

: A drops स

१५ : °खरोष्ट्र° A °गजाश्वोष्ट्र° F गजोष्ट्र not found in H

: आहारयामाभ स A

१८ : विध्यनुसारेण G

१९ : अपि not found in C

२० : सर्वत्र एव A

पुष्पिका: इत्यादिमहापुराणे पाद्मे A

# २१

शेष उवाच

अथ श्रुत्वा मरुत्तस्य संप्रवृत्तं तथा मखम् ।
अतप्यत सुराचार्यो भ्रातुरुन्नतिचिन्तया ॥१॥
यजमानो महानेष मरुत्तो हि महीपतिः ।
वर्धयिष्यति संवर्तं सुवर्णरजतादिभिः ॥२॥
गजैरश्वैरथैः रत्नैर्नानोपकरणैरपि ।
ततः स भूतिसम्पन्नः संवर्तः कृतसंचयः ॥३॥
अतिसर्वान् मुनीन् प्रायो मामप्यभिभविष्यति ।
इति चिन्तापरो नित्यं स लेभे शर्म न क्वचित् ॥४॥
विम्लानवदनो दीनः सुधर्मां नाविशत् सभाम् ।
इन्द्रः श्रुत्वा तु वैवर्ण्यं गुरोस्तत्र महायशाः ॥५॥
स्वयमागत्य पप्रच्छ गीष्पतिं दुःखकारणम् ।
कथं ते मलिनं ब्रह्मन् वदनं परिदृश्यते ॥६॥
सुखं स्वपिषि किं न त्वं भृताः किं परिचारकाः ।
देवानां ध्यायसे किं वा भावि किंचिदनिष्टकम् ॥७॥

गुरुरुवाच

शयेऽहं शयने शक्र सुखमेव महामते ।
भृता दासा न दुःखं च देवानां भावि भाव्यते ॥८॥

---

१b : यथामखम् F महामखम् G यथायथम् A
१d : उन्नतिदर्शनात् H
२c : वर्तयिष्यति C
४d : न लेभे शर्म स G
५b : न विशेत् A
६b : सुखकारणम् G
७b : किं not found in G

इन्द्र उवाच

कुतो दुःखं मानसं ते देहजं वाप्युपस्थितम् ।
निहन्मि सहसा विप्र तवानिष्टविधायिनः ॥९॥

बृहस्पतिरुवाच

मरुत्तो यजते यज्ञं वदन्ति मुनयः किल ।
व्रजन्ति च द्विजाः सर्वे लब्धुकामा महद्धनम् ॥१०॥
तं याजयति संवर्तो भ्राता यो मे कनीयसः ।
तेनाहं दुःखितः शक्र मलिनं च मुखं मम ॥११॥

इन्द्र उवाच

केन वार्थेन रिक्तोऽसि मम यस्त्वं पुरोहितः ।
मृत्युज्वरेण ग्रस्तस्ते संवर्तः किं करिष्यति ॥१२॥

बृहस्पतिरुवाच

सर्वांस्त्वमसुरान् जित्वा प्राप्यैन्द्रं पदमच्युत ।
तथापि दैत्यानुन्नद्धान् सानुबन्धान् जिघांससि ॥१३॥
प्रवृद्धेषु सपत्नेषु कः क्षमेत पुरन्दर ।
एतत् ते कारणं प्रोक्तं वैवर्ण्यस्य मम प्रभो ॥१४॥
सपत्नो वर्धते मह्यं न सोढुं तदहं क्षमः ।
तस्मादुपायैर्मघवन् संवर्तं नृपमेव वा ।
नियच्छसि यदि स्नेहान्मयि तिष्ठेत् सुखं तदा ॥१५॥
इन्द्रस्तु तदुपश्रुत्य जगाद जातवेदसम् ।
तं गच्छ मम वै दूतो मरुत्तं ब्रूहि मद्वचः ।
बृहस्पतिर्ममाचार्यो भवन्तं याजयिष्यति ॥१६॥

---

११a : यं F
१२c : त्रस्तस्ते AB
१५e : नियच्छेति F
१५f : तिष्ठे GH

शेष उवाच

ततः प्रायान् महाभाग जातवेदा महीपतिम् ।
बृहस्पतिं यज्ञपतौ मरुत्ते स्वयमर्पितुम् ॥१७॥
तं विलोक्य महीपालो रूपिणं वह्निमागतम् ।
आसनेन महार्हेण पाद्येनाचमनेन च ॥१८॥
अर्घ्येण च महाराजः पूजयामास भक्तितः ।
स गृहीत्वासनं पाद्यमुवाच हव्यवाहनः ॥१९॥
इन्द्रेण प्रेषितं दूतं विद्धि मां समुपागतम् ।
यदाह स भवन्तं हि तच्छृणुष्व महीपते ॥२०॥
गृहाण त्वं सुराचार्यम् ऋत्विजं यज्ञकर्मणि ।
स त्वां याजयिता राजन्ननुज्ञातो बलद्विषा ॥२१॥

मरुत्त उवाच

संवर्तो मे वृतः पूर्वं याजयितायमेव हि ।
बद्धोऽयमञ्जलिस्तस्मै देवाचार्याय भक्तितः ॥२२॥
याजयित्वा महेन्द्रं हि देवराजं जगत्प्रभुम् ।
कथं स याजयन्मर्त्यं सुधर्मायां निवत्स्यति ॥२३॥

अग्निरुवाच

लोका ये स्वर्गलोकेषु महान्तः शश्वदुज्ज्वलाः ।
लोकास्ते ते भविष्यन्ति प्रसादाद् बलविद्विषः ॥२४॥
तस्मिन् प्रसन्ने देवेन्द्रे मर्त्यानां किल दुर्लभः ।
कोऽन्वर्थो वसुधाधीश तद्वचः परिपालय ॥२५॥

---

१९a : अर्घेण BC
२०c : भगवन्तं हि G
२०d : तत् शृणुष्व CeFH
२२b : च G
२५b : किमदुर्लभः G

पृथिव्यां ये च ते लोकास्ते भवन्तु निरामयाः ।
राज्यं चास्खलितं तेऽस्तु वृणु देवगुरुं नृप ॥२६॥

मरुत्त उवाच

मैवं वादीर्जातवेदः पुनरेव ममाग्रतः।
धक्ष्यामि त्वां दारुणेन चक्षुषा कुपितो ह्यहम् ॥२७॥
तच्छ्रुत्वा वेपमानोऽसौ दाहाद् भीतो हुताशनः ।
शनैः शनैरथोत्थाय ययौ यत्र बृहस्पतिः ॥२८॥
यथातत्त्वं गीष्पतये वह्निः सर्वं न्यवेदयत् ।
तत् सर्वं प्राह शक्राय तूर्णमेव हुताशनः ॥२९॥
न गृह्णाति स ते वाचं धिषणायाञ्जलिः कृतः ।
याजयिष्यति संवर्त इत्युवाच पुनः पुनः ॥३०॥
प्रलोभितोऽपि बहुधा स्वर्गवासादिना पुनः ।
अथ मां दग्धुमारेभे कम्पमानोऽहमागतः ॥३१॥

इन्द्र उवाच

याहि वह्ने पुनस्तत्र ब्रूहि मद्वचनं हितम् ।
यदि गृह्णाति वाचं न स सदर्पो महीपतिः ।
हरिष्यामि शिरस्तस्य कुलिशेन दुरात्मनः ॥३२॥

अग्निरुवाच

न तत्र गन्तुं शक्नोमि पुनरेव शचीपते ।
चक्षुषा घोररूपेण धक्ष्यते मां महीपतिः ॥३३॥

इन्द्र उवाच

दाहशक्तिस्तवैवास्ति त्वमेव दहसे जगत् ।
कस्त्वां दहेत लोकेऽस्मिन् मा भयं कुरु पावक ॥३४॥

---

२६b : भवन्ति A
२६c : याज्यं G
२८a : तत् श्रुत्वा FH
३२d : मददर्पो e

तस्याश्रद्धेयवचसा किं प्राप्नोषि विभीषिकाम् ।
गच्छ मद्वचसा ब्रूहि स गृह्णातु वृहस्पतिम् ॥३५॥

अग्निरुवाच

दनुजान् सकलान् जित्वा महेन्द्रोऽसि महामते ।
उपास्यसे त्रिलोकस्थैः सर्वैरेव दिविस्थितः ॥३६॥
एवं सर्वेश्वरस्यापि तेजस्त्रैलोक्यमेव च ।
जहार बलवान् वृत्तः किमसाध्यं महोजसाम् ॥३७॥
शर्यातिं याजयामास च्यवनो नाम वै मुनिः ।
अगृह्णात् सोममश्विभ्यां भवतोऽनुज्ञया विना ॥३८॥
प्रत्यषेधद् भवांस्तं तु न तद् जग्राह तापसः ।
वचनं ते देवराज तदापि कुपितो भवान् ॥३९॥
तस्मै वज्रं समुद्यम्य त्वं प्रहर्तुं समुद्यतः ।
तदा स च्यवनो बाहुं स्तम्भयामास ते विभो ॥४०॥
घोरं च राक्षसं तत्र मदं नामासृजद् मुनिः ।
तेन त्वं सहसा ग्रस्तस्तं प्रसाद्य मुनिं पुनः ।
प्रदाय भागमश्विभ्यां ततो मुक्तोऽसि वासव ॥४१॥
स्मर तत् त्वं देवराज महातेजास्तथा नृपः ।
नाहं तत्र गमिष्यामि पुनरेव शचीपते ॥४२॥

इति श्रीपद्मपुराणे स्वर्गखण्डे मरुत्तोपाख्याने एकविंशतितमोऽध्यायः ॥२१॥

---

३५c : °वचनाद् C
३६c : ते not found in D
४०c : सदा C
४१d : संप्रसाद्य AF
४२b : ततो AF
पुष्पिका : इत्यादिमहापुराणे पाद्मे AF
ओमिति C

इन्द्र उवाच

यत् त्वदुक्तं ब्रह्मबलं तद्गरीयो भवत्यपि ।
न तत्र बलमन्येषां प्रभवेद्धव्यवाहन ॥१॥
मरुत्तस्य बलं तत् तु क्षत्रियस्य कुतो गुरु ।
तस्मै वज्रं महाघोरं विस्रक्ष्यामि दुरात्मने ॥२॥

अग्निरुवाच

ब्राह्मणेन भृतं तेजस्तस्य विद्धि शचीपते ।
संवर्तेन याजयता दृष्टं तादृग् बलं नृपे ॥३॥
धृतराष्ट्रं महाभागं गन्धर्वमपि ते प्रियम् ।
प्रेषयस्व गुरुं तत्र स वर्तयितुमर्हति ॥४॥
ततोऽब्रवीद् देवराजो धृतराष्ट्रं महामतिम् ।
गच्छ त्वं ब्रूहि गन्धर्व मरुत्तं वचनान्मम ॥५॥
बृहस्पतिं गृहाण त्वम् ऋत्विजं द्विजपुंगवम् ।
अन्यथा ते शिरोहर्ता वज्रेणास्मि सुवर्चसा ॥६॥
तं सन्देशं समादाय धृतराष्ट्रोऽभ्यगान् नृपम् ।
राजा तमर्हयाञ्चक्रे पाद्यार्घ्याचमनादिभिः ॥७॥

धृतराष्ट्र उवाच

यदाह भगवानिन्द्रो मन्मुखेन महीपते ।
तच्छृणुष्वाविचारेण त्वरितं कर्तुमर्हसि ॥८॥

---

२b : कुतो बलम् F
३d : नृप D
४d : संवर्तयितु॰ G
८c : तत् शृणुष्व° H

ऋत्विजं वृणु राजेन्द्र सुराचार्यं वृहस्पतिम् ।
अन्यथा ते शिरोहर्ता वज्रेणास्मि सुवर्चसा ॥९॥
इत्युक्त्वा त्वां सवज्रोऽसौ देवराजः शतक्रतुः ।
वर्तते त्वां हन्तुकामो विमाले नभसि स्थितः ॥१०॥
कर्तव्यं तच्च भवता महेन्द्रस्य वचोऽखिलम् ।
रक्ष प्राणांस्तथा यज्ञं रक्ष राज्यं द्विजानपि ॥११॥

मरुत्त उवाच

समयेन वृतो विप्रः संवर्तोऽयं महातपाः ।
एनं विहाय गन्धर्व न गृह्णामि वृहस्पतिम् ॥१२॥
पुरोहितो महेन्द्रस्य देवराजस्य गीष्पतिः ।
स तं याजयिता नित्यं संवर्तो मां महीपतिम् ।
न ते वाक्यं रोचयामि महेन्द्रप्रहितं हितम् ॥१३॥

गन्धर्व उवाच

श्रूयतां भीमनादोऽयं वासवस्य विहायसि ।
व्यक्तं कुलिशमोक्षाय प्रवृत्तोऽसौ सुराधिपः । १४॥
धृतराष्ट्रवचः श्रुत्वा मरुत्तः पुनरम्बरे ।
शुश्राव नादं शक्रस्य सवज्रस्य विहायसि ॥१५॥
संवर्तं ज्ञापयामास कृतपाणिपुटाञ्जलिः ।
एष आयाति वै वज्री दूरान्नादं समुत्सृजन् ।
प्रहरिष्यति वज्रेण रक्ष मां मुनिसत्तम ॥१६॥

---

७-९ : not found in Ae F. Instead of these e contains as follows :—

धृतराष्ट्रोऽथ गत्वा तं मरुत्तमिदमब्रवीद्
शक्रो यदाह वचनं तद् भवाञ्छ्रोतुमर्हति ॥
वृहस्पतिं गृहाण त्वमृत्विजं द्विजपुंगवम् ।
अन्यथा ते शिरोहर्त्ता वज्रेणास्मि सुवर्चसा ॥

११c : यज्ञं not found in G

११d : AF add गन्धर्वोऽपि ततो गत्वा सर्वमेतज् जगाद ह

संवर्त उवाच

भयं ते व्येतु राजेन्द्र संवर्ते मयि तिष्ठति ।
विद्यया स्तम्भयिष्यामि वज्रं तस्य शतक्रतोः ॥१७॥
सर्वेषामपि देवानामायुधेभ्यो भयं न ते ।
इत्युक्त्वा सहसा शक्रं स्तम्भयामास मारिष ॥१८॥
सवज्रं स महाभागस्तमूचे नृपतिं पुनः ।
स्तम्भितोऽसौ महाराज पुनः किं करवाणि ते ॥१९॥

मरुत्त उवाच

आह्वायस्व देवराजं यज्ञेऽस्मिन् मम वासवम् ।
गृह्णातु मे हविर्भागं देवैः सह पुरन्दरः ॥२०॥
राज्ञैवमुक्तः स तदा मुनिरात्मवतां वरः ।
आजुहाव देवराजं मन्त्रेण तपतां वरः ॥२१॥
मन्त्राहूतो महेन्द्रोऽथ स्रस्तकायो नभस्तलात् ।
अवशः स्वयमागच्छद् हविर्भोक्तुं शतक्रतुः ॥२२॥
तमायान्तं समालोक्य देवैः सह शतक्रतुम् ।
प्रत्युद्ययौ ससदस्यः सामात्यः सपुरोहितः ।
विधिवत् पूजयामास हयमेधेन भूपतिः ॥२३॥

संवर्त उवाच

स्वागतं ते सुरश्रेष्ठ सन्निधेहि चिरं क्रतौ ।
न शोभते हि भवता विना यज्ञः कथंचन ॥२४॥

मरुत्त उवाच

कृतकृत्योऽस्मि देवेन्द्र यज्ञोऽयं सफलो मम ।
जीवितं सफलं चाद्य भवता विहितं मम ॥२५॥

---

२१cd : not found in e
२१d : G reads यज्ञोऽस्मि for मन्त्रेण
: तपसां AF
: २५-२६ not found in e

बृहस्पतेरनुजोऽयं संवर्तो नाम तापसः ।
वितनोति क्रियातन्त्रं तदनुज्ञातु महसि ॥२६॥
जानामि ते गुरुं राजन् संवर्तं तिग्मतेजसम् ।
यस्याह्वानादागतोऽहं प्रीतिमान् मन्युवर्जितः ॥२७॥

संवर्त उवाच

यदि प्रीतोऽसि देवेन्द्र तत् स्वयं शाधि सर्वतः ।
कृत्याकृत्यविधानं च यज्ञेऽस्मिन् वितते मया ।
सभायाश्च प्रसंस्थानं सुचारु रचय प्रभो ॥२८॥

शेष उवाच

संवर्तेनैवमुक्तस्तु देवराजः सकिंकरः ।
सभां संवर्धयामास रत्नजालैः समन्ततः ॥२९॥
विश्रमार्थं देवतानां मन्दिराणि पृथक् पृथक् ।
विचित्रसोपानयुतान्यवसक्तानि हाटकैः ॥३०॥
गन्धर्वाणां गीतगृहं तथैवाप्सरसामपि ।
नाट्यशाला विचित्राश्च किन्नराणां पृथक् पृथक् ॥३१॥
मुनीनां भोजनागारानन्येषां च महत्तरान् ।
बलभित् कारयामास सभां दिव्यां मनोहराम् ॥३२॥
होमाय विविधान्येव हवींषि स्वयमेव हि ।
प्रत्यादिदेश मघवा यथायोग्यं यथाविधि ॥३३॥
राजापि सर्वं तच्चक्रे महेन्द्रेण नियोजितः ।
राशीन् बहून् सुवर्णस्य द्विजातिभ्यो ददौ किल ॥३४॥

---

मरुत्त उवाच····संवर्त्त उवाच not found in e
२८d : यज्ञेन C
२९b : स किंकरैः FH स्वकिंकरैः G
२९d : °ज्वालैः D
३२b : महत्तमान् C
३३c : भगवान् CeGH

राशयस्तत्र पतिता बहवोऽपि द्विजर्षभ ।
निराकाङ्क्षैर्द्विजैस्त्यक्ताः सुवर्णस्य समन्ततः ॥३५॥
तमेवं याजयित्वाऽथ महेन्द्रः परितोषितः ।
अक्षयं तस्य विदधे स्वर्गवासं द्विजर्षभ ।
स तद्यज्ञफलेनैव स्वर्गे वसति वै चिरम् ॥३६॥
इत्युक्तं ते मरुत्तस्य चरितं ब्राह्मणर्षभ ।
यथा स्वर्गेऽभवत्तस्य वासः सत्यरतस्य वै ॥३७॥

इति श्रीपद्मपुराणे स्वर्गखण्डे मरुत्तोपाख्यानं द्वाविंशतितमोऽध्यायः ॥२२॥

---

३५c : सक्ताः GH
३५cd : not found in e
३६ab : not found in e
३६d : स्वर्गं C
३७a : मे G
पुष्पिका : इत्यादिमहापुराणे पाद्मे A
द्वाविंशो° C

# २३

शेष उवाच

दिवोदासोऽपि राजर्षिः कथितो यो दिविस्थितः ।
चरितं तस्य वक्ष्यामि तच्छृणुष्व द्विजर्षभ ॥१॥
चन्द्रवंशे महाराजो धीरो भीमरथः स्मृतः ।
दिवोदासस्तु तत्पुत्रो वाराणस्यधिपोऽभवत् ॥२॥
एतस्मिन्नेव काले तु कृतदारो महेश्वरः ।
देव्याः स प्रियकामस्तु न्यवसच्छ्वसुरान्तिके ॥३॥
देवाज्ञया पार्श्वदा ये त्वभिरूपास्तपोधनाः ।
पूर्वोक्तैरुपदेशैश्च तोषयन्ति स्म पार्वतीम् ॥४॥
हृष्यते वै महादेवी मेना नैव प्रहृष्यति ।
जुगोप्सत्यसकृद् देवीं तां वै देवं च शूलिनम् ॥५॥
एकदा सुमुखी गौरी भवेन सह हर्षिता ।
क्रीडत्यक्षैः सखीनां वै मध्यगा वरवर्णिनी ॥६॥
पार्श्वदाः सर्वतस्तस्य महादेवस्य मारिष ।
विमुञ्चन्तः सिंहनादं चिक्रीडुर्गिरिगह्वरे ॥७॥
सर्वे मध्याह्नसमये भूतप्रेतपिशाचकाः ।
भ्रमन्ति स्माभितस्तत्र बुभुक्षा भैरवस्वनाः ॥८॥

---

१d : तत् शृणुष्व FH
२b : वीरो H
२d : द्विजर्षभ for अभवत्) G
३d : न्यवसत् श्व° ACF
५d : देवं तं चापि शूलिनम् G
७a : पार्षदाः BF

तच्छ्रुत्वा गिरिराजस्य पत्नी मेना तु कोपिनी ।
उवाच वचनं क्रूरं श्रावयन्ती शिवं शिवाम् ॥९॥
श्वसुराणां गृहे तिष्ठेज्जामाता सुचिरं यदि ।
कस्तस्य गौरवं कुर्याद् विलज्जस्य बुभुक्षतः ॥१०॥
दुहिता पितृगेहस्था पितुरुद्वेगदायिनी ।
न मानमर्हति प्रायः स्थितिरेषा सनातनी ॥११॥
इमे भूताः पिशाचाश्च कूष्माण्डा ब्रह्मराक्षसाः ।
भ्रमन्ति परितस्तेन श्मशानसदृशं गृहम् ॥१२॥
यत्र यत्र चिताभस्म प्राङ्गने विततं सदा ।
अमङ्गल्यमिदं भूतं राज्यं भूधरभूभृतः ॥१३॥
गृहेषु यत्र तत्रैव संभ्रमन्ति भुजङ्गमाः ।
पादार्पणेऽपि धरणौ बिभेमि सततं किल ॥१४॥
एवमेव पुरे ह्यत्र हन्त भूधरभूभृतः ।
श्मशानसदृशे वासं प्रायो नेच्छन्ति देवताः ॥१५॥
किं ब्रवीमि गिरीन्द्राय दत्ता येनाविचारणात् ।
दुहिता भूतनाथाय रुद्रायाकिंचनाय वै ॥१६॥
स पालयतु भूतेशमेनं जामातरं शिवम् ।
कन्यां च देवनासक्तां भूतप्रेतांश्च वै चिरम् ॥१७॥
दरिद्रः सर्वदैवासौ जामाता दुहितापि या ।
न प्रेक्षते पितृगृहं गृहकर्माणि च क्वचित् ॥१८॥

---

९a : तत् श्रुत्वा AeFH
१०ab : गृहेऽतिष्ठद् यामाता Ce
१०b : यामाता GH
१०c : कुर्यात् B
१७a : पालयति AF
१७b : यामातरं CeH
१८b : यामाता BCH

शेष उवाच

महादेवस्तु मेनोक्तं न शुश्राव विमत्सरः ।
स्त्रीस्वभावाच्च चुक्रोध पार्वती परमेश्वरी ॥१९॥

स्मितं कृत्वा च वरदा महादेवमभाषत ।
नेह वत्स्यामो हे देव नय मां स्वं निकेतनम् ॥२०॥

तथा कर्तुं महादेवः सर्वाँल्लोकानवैक्षत ।
वासार्थं रोचयामास पृथिव्यां द्विजसत्तम ॥२१॥

वाराणस्यां महातेजाः सिद्धक्षेत्रे महेश्वरः ।
दिवोदासेन तं ज्ञात्वा निविष्टां नगरीं भुवः ॥२२॥

नन्दिनं प्रेषयामास तस्य धर्मविवित्सया ।
छिद्रं क्वचन विज्ञाय समागत्य निवेदय ।
तेनैव तं नरपतिं त्याजयिष्यामि वै पुरीम् ॥२३॥

तच्छ्रुत्वा वचनं नन्दी शंकरस्य सदा प्रियः ।
विलोडयामास तस्य पुरं राष्ट्रं च सर्वतः ॥२४॥

क्वचिच्छिद्रं न स प्राप धर्मे चार्थे च भूपतेः ।
पुनरागत्य देवाय न्यवेदयत भूतराट् ॥२५॥

---

२०d स्वनिकेतनम् A
२१b : अवेक्षत AF
२२d : विनष्टां D
: भवः GH
२३c : क्वचित् C
२३b-२४c (धर्म°-विलोडयामास तस्य) not found in G
२४a : तत् श्रुत्वा BFG
२४ab : not found in e
२५a : क्वापि CDGH

नन्द्युवाच

करोति राज्यं निर्द्वन्द्वं दिवोदासः प्रतापवान् ।
विधाय राजधानीं स वाराणस्यां सुनिश्चलाम् ॥२६॥

महातेजा महाबुद्धिः प्रजा धर्मेण पालयन् ।
तपते सूर्यवद् राजा दुर्हृदां हृदि नेत्रयोः ॥२७॥

सोमवत् सुहृदामेष मानुषेषु स्वकेष्वपि ।
आखण्डल इवाखण्डं धनुःखण्डं बिभर्त्यसौ ॥२८॥

स धर्मराजवद् राजा धर्माधर्मविवेचकः ।
न दण्डयत्यदण्डान् स दण्ड्यांश्च परिदण्डयन् ॥२९॥

अग्निवत् समरे राजा परराष्ट्राणि दह्यति ।
प्रचेता इव पाशेन रिपून् बध्नाति शंकर ॥३०॥

दुष्टेषु रक्षोधर्माऽसौ वायुवत् प्राणदः सताम् ।
राजराजः स एवाद्य धनदो धनदानतः ॥३१॥

रिपुभी रुद्ररूपोऽसौ दृश्यते स रणाङ्गने ।
विश्वेषां स हि देवानां रूपं धत्ते महीपतिः ॥३२॥

साध्यास्तत्र न सिद्ध्यन्ति किन्नराः किंनराः पुनः ।
वसवस्तस्य किं कुर्युर्वसुदानरते नृपे ॥३३॥

किं नु कुर्युर्ग्रहास्तस्य सदा शान्तिरतस्य वै ।
मरुतो न गणयते तुषितास्तोषिताः सदा ॥३४॥

सर्वविद्याधरो राजा न विद्याधरमर्चति ।
गन्धर्वाणामसौ गर्वं गीतैः खर्वीकरोत्यपि ॥३५॥

---

२७b : प्रजाधर्मेण D
२९a : राजवद् not found in G
३२b : समराङ्गने CGH स वराङ्गने e
३४d : तोषिता ब्राह्मणाः सदा C अतोषितांस्तुर्षितः सदा A

नागा अपि यतो भीताः पलायन्ते महेश्वर ।
दनुजा अपि राजेन्द्रं सेवन्ते मनुजा इव ।
गजवाजिरथौघाश्च तस्य राज्ञो महत्तराः ॥३६॥
यद्यप्यसौ धराधीशः प्रीणात्येवाध्वरैः सुरान् ।
त्वदध्वरभुजोऽत्यन्तं तथापि सुहृदो न ते ॥३७॥
अधर्मिणः समेधन्ते धनधान्यसमृद्धिभिः ।
अधर्मेणैव च परं समूलं यान्त्यधोगतिम् ॥३८॥
प्रजाः पालयतस्तस्य पुत्रानिव निजौरसान् ।
सतां धर्मे रतस्यास्य न देवा धर्मसंग्रहाः ॥३९॥
सद्गुणाम्भोनिधेस्तस्य सदा शक्तिमतः प्रभो ।
चतुरोपायविज्ञस्य न रन्ध्रं विविशुः सुराः ॥४०॥
बुद्धिमन्तोऽपि विबुधाः विप्रतीकर्तुमुद्यताः ।
न शक्नुवन्ति देवेश मनागपि महीपतेः ॥४१॥
एकपत्नीव्रताः सर्वे पुरुषास्तस्य मण्डले ।
नारीषु काचिन्नास्त्येव पातिव्रत्यविवर्जिता ॥४२॥
न ब्राह्मणोऽनधीयानो नाशूरः क्षत्रियस्तथा ।
नार्थोपार्जनकर्माणि वैश्योऽजानन्नधार्मिकः ॥४३॥
अनन्यवृत्तयः शूद्राः द्विजशुश्रूषणे रताः ।
दिवोदासस्य देवेश राज्ये वाराणसीपुरे ॥४४॥
अप्लुतब्रह्मचर्याश्च शूद्रास्तेऽब्रह्मचारिणः ।
द्विजा गुरुकुलाधीना वेदग्रहणतत्पराः ॥४५॥
आतिथ्यधर्मप्रवणाः सर्वशास्त्रविचक्षणाः ।
नित्यं साधुसमाचारा गृहस्थास्तस्य सर्वतः ॥४६॥

३९d : °संग्रहः F
४२a : पूर्वे C
४३d : न धार्मिकः C

वानप्रस्थाश्च ये तत्र वन्यवृत्तिविधायिनः ।
निस्पृहा ग्राम्यवार्तासु ते वेदाननुवर्तिनः ॥४७॥
यतयस्तत्र देवेश निर्मुक्ता निष्परिग्रहाः ।
वाङ्मनःकर्मदण्डाढ्या दिवोदासस्य भूपतेः ॥४८॥
अनपत्यो हि तद्राष्ट्रे धनहीनोऽपि कोऽपि न ।
अनपत्यः स एवैको न चासौ वयसाधिकः ॥४९॥
अवृद्धसेवी न कश्चिदकाण्डमृतिभाक् न च ।
न मिथ्याशंसनं राज्ये वञ्चको न न हिंसकः ॥५०॥
न पाषण्डा न वैतण्डा न रण्डा न च शौण्डिकाः ।
श्रुतिघोषो हि सर्वत्र शास्त्रवादः पदे पदे ॥५१॥
सर्व एव शुभालापाः सर्वे मङ्गलनिस्वनाः ।
वीणावेणुप्रवादाश्च मृदङ्गा मधुरस्वनाः ॥५२॥
सोमपानं विना देव पानवार्ता न विद्यते ।
मांसस्य भोजनं तत्र पुरोडाशेषु शंकर ॥५३॥
न देवनं तथाक्षैश्च नाधमर्णा नराः क्वचित् ।
कुतो वार्ता तस्कराणां कदर्यानां च तत्र वै ॥५४॥

---

४७d : देवान° G
४८c : मनोवाक्° G
: °दण्डाद्या F
४९a : अनपत्योऽपि C
४९c : चैवैको C
५०a : नो CDGH
५०b : अकाल° AB
: च न BCF
५१b : चण्डा A
५१c : प्रतिघोषो D
५२a : सर्वत्र च C
५२c : °प्रणादाश्च C

पुत्रस्य पित्रोः पदयोः पूजनं देवपूजनम् ।
उपवासो व्रतं तीर्थं देवताराधनं परम् ॥५५
नारीणां स्वपतेः पूजा तदाज्ञापरिपालनम् ।
अग्रजे पितृभक्तिश्च भृत्यानां स्वामिरक्तता ॥५६॥
उत्तमानां च वर्णानां हीनाः स्तुतिकराः सदा ।
ब्राह्मणः पूज्यते सर्वैर्वर्णैर्विहितसत्क्रियैः ॥५७॥
ब्राह्मणानां मुखाग्नौ च हूयते सततं हविः ।
सर्वत्र सर्वे विद्वांसः समर्च्यन्ते मनोरथैः ॥५८॥
विद्वद्भिश्च तपोनिष्ठास्तपोनिष्ठैर्जितेन्द्रियाः ।
जितेन्द्रियैर्ज्ञाननिष्ठा ज्ञानिभिः सिद्धयोगिनः ॥५९॥
वापीकूपतडागानामारामाणां पदे पदे ।
शुचिभिर्द्रव्यसंभारैः कर्तारस्तत्र भूरिशः ॥६०॥
तद्राष्ट्रे हृष्टपुष्टाश्च दृश्यन्ते सर्वजातयः ।
एवं तस्य महीशस्य छिद्रं नैव प्रदृश्यते ॥६१॥
तद् विचार्य महादेव यद् युक्तं कर्तुमर्हसि ।
तच्छ्रुत्वा शंकरः प्राह निकुम्भं नाम पार्श्वदम् ॥६२॥
राक्षसेश पुरीं सर्वां शून्यां वाराणसीं कुरु ।
मृदुनैवाभ्युपायेन वीर्यवान् हि स भूपतिः ॥
अनपत्यत्वमेवैकं छिद्रमुद्दिश्य भूपतेः ॥६३॥
ततो गत्वा निकुम्भस्तु पुरीं वाराणसीं तदा ।
स्वप्ने निदर्शयामास कण्टकं नाम नापितम् ॥६४॥
श्रेयस्तेऽहं करिष्यामि स्थानं मे रचयानघ ।
मद्रूपां प्रतिमां कृत्वा नगर्यन्ते तथैव च ॥६५॥

---

५६c : पितृवद्भक्तिः CG
६२c : तत् श्रुत्वा C D F H

नापितः प्रातरुत्थाय व्यज्ञापयत भूपतिम् ।
सर्वं तं स्वप्नवृत्तान्तं राजा चैवान्वमन्यत ।।६६।।

पुरद्वारे विधायाथ मण्डपं वै यथाविधि ।
स्थापयामास तं तत्र नापितेन महीपतिः ।।६७।।

पूजा तु महती तस्य नित्यमेवोपतिष्ठते ।
गन्धैः पुष्पैस्तथा माल्यैः प्रोक्षणीयैः स्तवैस्ततः ।।६८।।

अन्नप्रदानयोगैश्च तदद्भुतमिवाभवत् ।
एवं संपूज्यते तत्र नित्यमेव गणेश्वरः ।।६९।।

ततो वरसहस्रं तु नागराणां स यच्छति ।
पुत्रान् हिरण्यमायुश्च सर्वान् कामांस्तथैव च ।।७०।।

राज्ञस्तु महिषी श्रेष्ठा सुयशा नाम विश्रुता ।
पुत्रार्थं सागता देवी साध्वी राज्ञा प्रचोदिता ।।७१।।

पूजां तु विपुलां कृत्वा देवी पुत्रमयाचत ।
पुनः पुनरथागम्य बहुशः पुत्रकारणात् ।।७२।।

न प्रयच्छति पुत्रं हि निकुम्भः कारणेन ह ।
राजा तु यदि संक्रुद्धः कार्यसिद्धिस्ततो भवेत् ।।७३।।

---

६६b : व्यज्ञापयत् तु D
६६c : तत् A
६६d : °वान्वपद्यत D
६७a : °द्वारि A
६८a : च A
६८d : व च B H तथैव च C D G
६९c : संपूर्यते F
: अत्र A
७०d : च not found in F
७३d : तदा G
: अभवत् AF

विचिन्त्येति तदा राज्ञी राज्ञे तच्च न्यवेदयत् ।
तच्छ्रुत्वा विप्रियं राजा क्रुद्धोवचन मब्रवीत् ॥७४॥
भूत एष मम द्वारि नागराणां प्रयच्छति ।
प्रीतो वरान् वै शतशो मम किं न प्रयच्छति ॥७५॥
मामकैः पूज्यते नित्यं नगर्यां मे सदैव हि ।
विज्ञापितो मयार्थं वै देव्या मे पुत्रकारणात् ।
न ददाति च पुत्रं मे कृतघ्नः केन हेतुना ॥७६॥
अतो नार्हति वै वासं मत्सकाशे विशेषतः ।
तस्मात्तु नाशयाम्यद्य स्थानमस्य दुरात्मनः ॥७७॥
एवं विनिश्चित्य तदा दिवोदासः प्रतापवान् ।
स्थानं गणपतेस्तस्य नाशयामास तत्क्षणात् ॥७८॥
भग्नमायतनं दृष्ट्वा तच्छिद्रं तस्य भूपतेः ।
राजानमशपत् क्रुद्धो निकुम्भः शम्भुकिंकरः ॥७९॥
यस्मादनपराधस्य त्वया स्थानं विनाशितम् ।
पुर्यकस्मादियं नूनं तव शून्या भविष्यति ॥८०॥
ततस्तेन तु शापेन क्षेमको नाम राक्षसः ।
तत्र पुर्यां वसन् देवप्रेषितच्छिद्रकाङ्क्षुकः ॥८१॥
क्रमेण तत्पुरजनान् भक्षयामास सर्वतः ।
अवशिष्टाः प्रजाः सर्वास्तां विहाय पुरीं ततः ।
विषयान्ते निवासाय पुरीं चक्रुरुपद्रुताः ॥८२॥

---

७४b : सर्व C
७४c : तत् श्रुत्वा A C F
७५a : भूप C
७५cd : not found in A
७६a : ममार्थ A
७७c : अस्य H
८०d : शून्यं C D G H
८२e : निवेशाय C

राजापि शून्यां नगरीं दृष्ट्वा परमदुःखितः ।
विषयान्तेषु वसतिं प्रजाभिः समकारयत् ॥८३॥
तस्यां पुर्यां ततो देवो निर्ममे पदमात्मनः ।
रमते तत्र वै देवो रममाणो गिरेः सुताम् ॥८४॥
न रतिं तत्र वै देवी लभते ब्राह्मणर्षभ ।
उवाच देवदेवं सा पार्वती परमेश्वरी ॥८५॥
वसाम्यत्र न पुर्यां तु त्वमेतद् वस शंकर ।
न मनो रमते मह्यं वाराणस्यां कथंचन ॥८६॥
हसन्नुवाच भगवांस्त्र्यम्बकस्तां गिरेः सुताम् ।
यदि देवि पुरी चैषा न ते प्रियकरी स्मृता ॥८७॥
कलौ नैव पुरी स्थाता चान्तर्धानं गमिष्यति ।
अन्तर्हिते पुरे ह्यस्मिन् पुनरन्यद् भविष्यति ॥८८॥
एवं वाराणसीं शप्त्वा निवेशं पुनरागतः ।
चकार मन्दरे वासं देवो देव्या सहोमया ॥८९॥
दिवोदासस्तु तत्रैव तथा चक्रे पुरं पुनः ।
अयजद् यज्ञविधिना सर्वान् देवान् महामतिः ।
देवास्तुष्टा ददुस्तस्मै स्वर्गमक्षयमेव च ॥९०॥

इति श्रीपद्मपुराणे स्वर्गखण्डे दिवोदासोपाख्यानं नाम त्रयोविंशति-
तमोऽध्यायः ॥२३॥

---

८३c : विषयान्ते च A F
८३d : पूजाभिः H
८८c : तस्मिन् A F
९०c : अयजत् A
पुष्पिका : इत्यादिमहापुराणे पाद्मे A
नाम not found in C G
त्रयोविंशोऽध्यायः G

## २४

शेष उवाच

हरिश्चन्द्रो राजसूयं चकार बहुदक्षिणम् ।
तेन स्वर्लोकमगमत् सख्यं शक्रेण लब्धवान् ॥१॥
हैहयः कार्तवीर्यस्तु दत्तात्रेयप्रसादतः ।
हतो रामेण संग्रामे स्ववासं लब्धवान् व्रती ॥२॥
दिलीपस्त्वश्वमेधेन पृथाश्वजनकौ तथा ।
ययातेर्नहुषस्यापि चरितं कीर्तितं तव ॥३॥
अरिष्टसिंहसेनाद्या ये चान्ये कथितास्तव ।
केचिद् यागेन पुण्येन केचिद् दानप्रसङ्गतः ॥४॥
प्रव्रज्यागमनात् केचित् केचिदातिथ्यकल्पनात् ।
स्वर्गे वासं प्रकुर्वन्ति राजानो बहुविश्रुताः ॥५॥
अन्ये संग्राममध्ये तु बलवन्तोऽनिवर्तिनः ।
रिपुभिर्निहताः प्राप्ताः स्वर्गे वासं द्विजर्षभ ॥६॥
मान्धाता तु महाराजो नारदाद् देवदर्शनात् ।
शुश्राव धर्मान् विविधान् लोकचर्याप्रदर्शनान् ॥७॥
राजधर्मान् दानधर्मान् वर्णाश्रमविधींस्तथा ।
प्रवर्तयामास तथा तान् धर्मान् जगतीपतिः ॥८॥
तस्यैव समुदाचारो वर्ततेऽद्यापि भूतले ।
ये तान् धर्मानतिक्रम्य वर्तन्ते पुरुषाधमाः ॥
नियतं नरके वासस्तेषां वै द्विजसत्तम ॥९॥

---

२b : दत्त्वात्रेय° e
२c : अहो C
७c : सर्वान् धर्मान् स G
९c : यस्तान् G
९d : वर्नते G

ये तान् धर्मान् श्रद्दधाना आचरन्ति वरा नराः ।
स्वर्गे वासो भवेत् तेषामेतज्जानीहि सत्तम ॥१०॥
स धर्मसेतून् धर्मात्मा लोके संचारयन् बहून् ।
इष्ट्वा च विविधैर्यज्ञैः स्वर्लोकं गतवान् नृप ॥११॥

वात्स्यायन उवाच

चरितं तस्य राजर्षेः श्रोतुमिच्छामि भूधर ।
कस्य पुत्रः कथं जातो मान्धाता नामतः कथम् ॥१२॥
कांश्च धर्मान् स शुश्राव नारदाज्जगतीधर ।
कथं प्रवर्तयामास धर्मान् वै लोकभावनान् ।
तत् सर्वं विस्तरेणैव ब्रूहि शेष कृपानिधे ॥१३॥

शेष उवाच

इक्ष्वाकुवंशप्रवरो युवनाश्वो महीपतिः ।
सोऽयजत् पृथिवीपालः क्रतुभिर्भूरिदक्षिणैः ॥१४॥
अश्वमेधसहस्रं स प्राप्य धर्मभृतां वरः ।
अन्यैश्च क्रतुभिः पुण्यैरयजत् स्वाप्तदक्षिणैः ॥१५॥
अनपत्यः स राजर्षिर्महात्मा च महाव्रतः ।
अमात्ये राज्यमाधाय वने वासं चकार ह ॥१६॥
तं निर्विण्णमथो दृष्ट्वा मुनयो धर्मतत्पराः ।
पुत्रेष्टिं कारयामास राजानं वनवासिनम् ॥१७॥
एकदा तु महाभाग महर्षिर्भृगुनन्दनः ।
संभृतं मन्त्रपूतेन वारिणा कलशं द्विज ॥१८॥
स्थापयामास विधिना यज्ञवेद्यां महामतिः ।

---

१३b : जगतीधरः G
१५ab : संप्राप्य D
१५d : प्राप्त° A F
१८d : वारिणः F

यत् पीत्वा राजपत्नी तु गर्भं वै धारयिष्यति ॥१९॥
तं न्यस्य कलशं वेद्यां सुषुपुस्ते महर्षयः ।
रात्रिजागरणाच्छ्रान्ताः संवेष्ट्य परितो घटम् ॥२०॥
युवनाश्वस्तु नृपतिरुपवासकृशीकृतः ।
निशीथेऽतिपिपासार्तो जलार्थी व्यचरद् वने ॥२१॥
शुष्ककण्ठः पिपासार्तः पानीयार्थी महीपतिः ।
वेदीमासाद्य तान् विप्रान् सलिलं समयाचत ॥२२॥
तस्य श्रान्तस्य शुष्केन कण्ठेन क्रोशतस्ततः ।
नाश्रौषीत् कण्ठनादं तु कोऽपि तत्र कृशस्वरम् ॥२३॥
ततस्तं कलशं दृष्ट्वा जलपूर्णं स पार्थिवः ।
अभ्यद्रवत वेगेन जलार्थी जगतीपतिः ॥२४॥
स पीत्वा शीतलं तोयं यावदिच्छं यथासुखम् ।
पिपासां शमयामास सुखं चावाप्नवान् बहु ॥२५॥
ततस्ते प्रत्यबुध्यन्त मुनयस्तु तपोधनाः ।
निस्तोयं तं च कलशं ददृशुः सर्व एवते ॥२६॥
कस्य कर्मेदमिति ते पर्यपृच्छन् समागताः ।
युवनाश्वो ममेत्याह सत्यं समभ्यपद्यत ॥२७॥
न युक्तमिति तं प्राह भगवान् भार्गवस्तथा ।
सुतार्थं स्थापिता ह्यापस्तपसा चैव संभृताः ॥२८॥
मया ह्यत्राहितं ब्रह्म तप आस्थाय दारुणम् ।
पुत्रार्थं तव राजर्षेर्महाबलपराक्रमः ॥२९॥

---

२०b सुषुप्ताः A
२०c : °जागरणात् श्रान्ताः C D
२१a : च (for तु) A
२४a ! कलसं F
२७d : °पद्यते D समभिपद्यत F H
२८b : तदा F
२९d : °पराक्रम B

महाबलो महावीर्यस्तपोबलसमन्वितः ।
यः शक्रमपि वीर्येण गमयेद् यमसादनम् ॥३०॥
अनेन विधिना राजन् मयैतदुपपादितम् ।
अब्भक्षणात् त्वया राजन् न युक्तं कृतमद्य वै ॥३१॥
न त्वद्य शक्यमस्माभिरेतत् कर्तुमतोऽन्यथा ।
नूनं दैवकृतं ह्येतद् यदेवं कृतवानसि ॥३२॥
पिपासितेन याः पीता विधिमत्र पुरस्कृताः ।
आपस्त्वया महाराज मत्तपोवीर्यसंभृताः ॥३३॥
ताभ्यस्त्वयात्मना पुत्रमीदृशं जनयिस्यसि ।
विधास्यामो वयं चात्र तवेष्टिं परमाद्भुताम् ॥३४॥
यथा शक्रसमं पुत्रं जनयिष्यसि वीर्यवान् ।
गर्भधारणजं चापि न खेदं समवाप्स्यसि ॥३५॥
ततो वर्षशते पूर्णे तस्य राज्ञो महात्मनः ।
वामं पार्श्वं विनिर्भिद्य सुतः सूर्य इवाभवत् ॥३६॥
मुनीनां तु प्रभावेण राजापि न ममार सः ।
ततः शक्रो महातेजास्तं दिदृक्षुरुपागमत् ॥३७॥
ततो देवा महेन्द्रं तमपृच्छन् धास्यतीति कम् ।
प्रदेशिनीं ततोऽस्यास्ये शक्रः समभिसंदधे ॥३८॥
मामयं धास्यतीत्येवं भाषिते चैव वज्रिणा ।
मान्धातेति च नामास्य चक्रुः सेन्द्रा दिवौकसः ॥३९॥

---

३४c : चापि F
३५c : गर्भस्य धारणं A
३६b : न राजापि AF
३८b : किं CeH
३९c : मान्धाता चेति F
३९d : सर्वे F

प्रदेशिनीं शक्रदत्तामास्वाद्य स शिशुस्तदा ।
अवर्धत महातेजाः किष्कून् विप्र त्रयोदश ॥४०॥
वेदास्तं सधनुर्वेदा दिव्यान्यस्त्राणि मारिष ।
उपतस्थुर्महाभागं ध्यातमात्राणि सर्वशः ॥४१॥
आजगरं नाम धनुः शराः शृङ्गोद्भवाश्च ये ।
अभेद्यं कवचं चैव सद्यस्तमुपशिश्रियुः ॥४२॥
सोऽभिषिक्तो मघवता स्वयं शक्रेण मारिष ।
धर्मेण व्यजयल्लोकांस्त्रीन् विष्णुरिव विक्रमैः ॥४३॥
तस्याप्रतिहतं चक्रं प्रावर्तत महात्मनः ।
रत्नानि चैव राजर्षिं स्वयमेवोपतस्थिरे ॥४४॥
तस्येयं वसुसम्पूर्णा वसुधा ब्राह्मणर्षभ ।
तेनेष्टं विविधैर्यज्ञैर्बहुभिश्चाप्तदक्षिणैः ॥४५॥
कृतकृत्यो महातेजा धर्मं प्राप्य च पुष्कलम् ।
शक्रस्यार्धासनं लेभे महाबलपराक्रमः ॥४६॥
एकाह्ना पृथिवी तेन धर्मनित्येन धीमता ।
निर्जिता शासनादेव सरत्नाकरपत्तना ॥४७॥
तस्य चैत्यैर्महाभाग क्रतूनां दक्षिणावताम् ।
चतुरन्ता मही व्याप्ता नासीत् किंचिदनावृतम् ॥४८॥
तेन पद्मसहस्राणि गवां दश महात्मना ।
ब्राह्मणेभ्यो महाभाग दत्तानीति प्रचक्षते ॥४९॥
तेन द्वादशवार्षिक्यामनावृष्ट्यां महात्मना ।
वृष्टं सस्यविवृद्ध्यर्थं मिषतो वज्रपाणिनः ॥५०॥

---

४४b : प्रवर्तेत D
४५a : बलसम्पूर्णा C रमसम्पूर्णा D
५०b : अनावृष्टौ G
५०c : वृष्टि F
: शस्य° eFGH
५०d : रिषतो D

तेन सोमकुलोत्पन्नो गान्धाराधिपतिर्महान् ।
गर्जन्निव महामेघः प्रमथ्य निहतः परैः ॥५१॥
दशाननो दिग्विजये प्रस्थितो यस्य संगरे ।
तृणानि निदधद् दन्तैर्जीवमात्रावशेषितः ॥५२॥
प्रजाश्चतुर्विधास्तेन त्राता ब्रह्मन् महात्मना ।
तेनात्मतपसा लोकाः स्थापिताश्च महात्मना ॥५३॥

इति श्रीपद्मपुराणे स्वर्गखण्डे मान्धात्रुपाख्याने चतुर्विंशतितमोऽध्यायः ॥२४॥

---

५१d : निभृतः H
: शरैः G
५२b : संग्रामे ACe संगतौ G
५२c : दन्ते C
५३a : तेनात्र A
पुष्पिका : इत्यादिमहापुराणे पाद्मे A
पद्मपुराणे not found in D

# २५

शेष उवाच

एकदा तु महाराजो मान्धाता भूरिदक्षिणम् ।
समाप्य वाजिमेधं स कृत्वा चावभृथाप्लवम् ॥१॥
निषण्णश्चासने दिव्ये तोषितैर्मुनिभिः सह ।
उपगीयमानचरितो वन्दिभिर्मागधैरपि ॥२॥
ददर्श नारदं व्योम्नोऽवतरन्तं महाप्रभम् ।
नृपासनादथोत्थाय सह सर्वैर्महर्षिभिः ॥३॥
प्राञ्जलिः प्रणतो भूत्वा न्यवेदयदथासनम् ।
पूजयित्वा यथान्यायं स्वागतेनाभिनन्द्य च ॥४॥
पाद्यमर्घ्यं च गां चैव यथाविधि समाहरत् ।
स तत्रोपाविशद् विप्रः कृतासनपरिग्रहः ॥५॥
विश्रान्तं सुखमासीनं मान्धाता नृपसत्तमः ।
पप्रच्छ तं महाभागं देवर्षिममितद्युतिम् ॥६॥
भगवन् मम सन्देहो हृदि जागर्ति सत्तम ।
तं ते प्रष्टुमहं सर्वमिच्छामि कृपया वद ॥७॥
कञ्चित् कालमिह स्थित्वा प्रश्नान् मे मुनिसत्तम ।
श्रुत्वावधार्य मनसा भवान् वक्तुमिहार्हति ॥८॥

---

शेष उवाच not found in C
३b : गतवन्तं AF
५c : विप्र e
६c : महाभाग e
६c-८b : not found in C

कृपया यदि देवर्षे वक्तुमिच्छसि साम्प्रतम् ।
प्रश्नान् क्रमेण तद् वच्मि अनुजानीहि मारिष ॥९॥

नारद उवाच

भवान् सूर्यकुले जातः साधूनामसि सम्मतः ।
भवतः सङ्गमोऽस्माकं प्रार्थनीयो हि सर्वदा ॥१०॥
भवत्सङ्गप्रसङ्गार्थं प्रश्नान् वक्ष्यामि ते नृप ।
अविशङ्कं कुरु प्रश्नान् सर्वान् वक्ष्यामि भूपते ॥११॥

मान्धातोवाच

कुतः सृष्टमिदं विश्वं जगत् स्थावरजङ्गमम् ।
प्रलये च कमभ्येति सर्वं तद् वद नारद ॥१२॥
ससागरः सगगनः सशैलः सबलाहकः ।
सभूमिः साग्निपवनो लोकोऽयं केन निर्मितः ॥१३॥
कथं सृष्टानि भूतानि कथं वर्णविभक्तयः ।
शौचाशौचं कथं तेषां धर्माधर्मविधिः कथम् ॥१४॥
कीदृशो जीवतां जीवः क्व वा गच्छन्ति ते मृताः ।
एतान् मे क्रमशः प्रश्नान् भवान् वक्तुमिहार्हति ॥१५॥

नारद उवाच

अनादिरात्मपुरुषो निर्गुणः प्रकृतेः परः ।
एक एव स एवासीन् नान्यद् यत् सदसत्परम् ॥१६॥
प्रत्यग्धामा स्वयंज्योतिर्विश्वं यत्र समन्वितम् ।
यदृच्छया पृथग्भूतां प्रकृतिं त्रिगुणात्मिकाम् ॥१७॥

---

९a : यद् AF
९b : इच्छामि G
१०d : अपि for हि) CeFGH
: सर्वथा eFH
१२c : अपि G
१३a : सगगन not found in G
१५c : ये A

समैक्षत महाराज स्रष्टुमिच्छन्निदं जगत् ।
ईक्षणादेव सा देवी तद्वीर्यं दधती महत् ॥१८॥
विक्षोभं परमं लेभे महत्तत्त्वं सुषाव च ।
स महान् विश्वमेतद्धि व्यञ्जयन् जगदङ्कुरः ॥१९॥
तमस्तीव्रं पुरोवर्ति महद्प्यपिबन् प्रभुः ।
निरञ्जनं सत्त्वगुणं साक्षाद् भगवतः पदम् ॥२०॥
चित्रं यद् वासुदेवाख्यं महत्तत्त्वं तदेव हि ।
स्वच्छत्वं निर्विकारत्वं शान्तत्वं च महीपते ॥२१॥
चित्तस्य लक्षणं प्रोक्तं महत्तत्त्वस्य चैव हि ।
विकारेणैव महतोऽप्यहङ्कारस्तदाभवत् ॥२२॥
क्रियाशक्तिरभूत् तस्य प्रसादात् परमेष्ठिनः ।
सात्त्विको राजसश्चैव तामसश्चेति स त्रिधा ॥२३॥
सात्त्विकं मनसः स्थानं राजसानीन्द्रियाणि च ।
तामसानि च भूतानि त्रिधा वृत्तिर्विभाव्यते ॥२४॥
यत्र देवो महाबाहो सङ्कर्षण उदाहृतः ।
कर्तृत्वं कारणत्वं च कार्यत्वं चेति लक्षणम् ॥२५॥
शान्तत्वं घोरता चैव विमूढत्वं च तत्क्रिया ।
तामसात्तु अहङ्काराद् भगवच्छक्तिवर्धितात् ॥२६॥

---

१८a : तया सम महाराज G
१९b : ह G
२०d : साक्षात् A
२१a : तद् A
१९c-२१b : not found in G
२१d : ततोऽभवत् F
२३a : त्रिधा शक्तिः B
२३d : तत् A
२६c : अहङ्कारा AC
२६d : भगवद्भक्ति° C भगवत् शक्ति° AFH

शब्दानामाभवद् राजन् सर्वभूतादिकारणम् ।
अर्थानामाश्रयो यो हि दर्शने च नियोजकः ।।२७।।

नभसश्च गुणः शब्द एतच्छब्दस्य लक्षणम् ।
नभस्तस्माद् विकुर्वाणाच्छब्दादेवाभवन्नृप ।।२८।।

छिद्रसम्पादकत्वं च बाह्याभ्यन्तरवर्तिता ।
घ्राणेन्द्रियाधिष्ठातृत्वं नभसो लक्षणं विदुः ।।२९।।

नभोऽपि विकृतिं प्राप्तं कालगत्या महीपते ।
स्पर्शं ससर्ज सहसा भगवच्छक्तिचोदितम् ।।३०।।

मार्दवं चैव काठिन्यं शीतता चोष्णमेव च ।
स्पर्शस्य लक्षणं ह्येतद् वायोर्गुणविभावनात् ।।३१।।

तस्माद् वायोरभूद् राजन् शब्दस्पर्शगुणावहः ।
चालनं सङ्गमं चैव प्राप्तिश्च द्रव्यशब्दयोः ।।३२।।

सर्वेन्द्रियाणामात्मत्वं वायोर्लक्षणमुच्यते ।
वायोः स्पर्शगुणाद् राजन् रूपं जज्ञे समुज्ज्वलम् ।।३३।।

आकृतिः सर्वद्रव्याणां व्यक्तिभेदे च योग्यता ।
तन्मात्रत्वं तेजसश्च एतद् रूपस्य लक्षणम् ।।३४।।

ततस्तेजो विकुर्वाणाद् रूपाज्जातं महीपते ।
प्रदीपनं च पचनमदनं हिममर्दनम् ।
शोषणं क्षुत्तृषा चेति तेजसः कर्म भूपते ।।३५।।

---

२८b : एतत् शब्दस्य AC
२८c : विकुर्वाणा G
२८cd : °कुर्वाणात् शब्दाद् ACDF
३१c : एतत् वायो° CeFGH
३२a : वायुः GH
३५cd : not found in C
३५d : °मदनम् C

रूपं स्पर्शश्च शब्दश्च तेजसस्तत्र ये गुणाः ।
रूपमात्रात् तेजसोऽपि रसो नाम गुणोऽभवत् ॥३६॥
कषायो मधुरस्तिक्तः कट्वम्लौ लवणस्तथा ।
रसस्य लक्षणं ह्येतत् तस्माज्जलमभून्नृप ॥३७॥
क्लेदनं सर्ववस्तूनां चूर्णितानां च पिण्डनम् ।
तृप्तिः प्राणगणानां चाप्यायनं तापनोदनम् ॥३८॥
अम्भसो लक्षणं ह्येतद् गुणाः शब्दस्पृशिस्तथा ।
रूपं च परसम्बन्धाद् रसस्तस्य गुणः स्मृतः ॥३९॥
अम्भसो विकृताद् गन्ध उच्यते तस्य लक्षणम् ।
गन्ध एको द्रव्ययोगात् पूतिः सौरभ्यमेव च ॥४०॥
करम्भः शान्त उग्रश्च इत्याद्यं भेदलक्षणम् ।
तस्माद् भूमिरभूद् राजन् गुणाः पञ्चैव तत्र हि ॥४१॥
भावनं ब्रह्मणः स्थानं धारणं सद्विशेषणम् ।
सर्वसत्त्वगुणोद्भेदः पृथिवीलक्षणं स्मृतम् ॥४२॥
ततस्तेजोमयं दिव्यं पद्मं सृष्टं स्वयम्भुवा ।
तस्मात् पद्मात् समभवद् ब्रह्मा वेदमयो विधिः ॥४३॥
प्रजाविसर्गं विविधं मानसो मनसाऽसृजत् ।
असृजद् ब्राह्मणानेव पूर्वं ब्रह्मा प्रजापतिः ॥४४॥
आत्मतेजोऽभिनिर्वृत्तान् भास्कराग्निसमप्रभान् ।
ततः सत्यं च धर्मं च तपो ब्रह्म च शाश्वतम् ।
आचारं चैव शौचं च स्वर्गाय विदधे विभुः ॥४५॥

---

३६a : शब्दश्च not found in G
३६b : तेजसस्तु त्रयो गुणाः H
३८a : एतत् A
३९d : रसस्तु स्वगुणः ABCG रसस्तु सगुणः H
४०c : एकद्रव्ययोगात् AC
४२b : यद्° AF मद्° B
४३c : समभवत् A
४५e : चापि G

देवदानवगन्धर्वा दैत्यासुरमहोरगाः ।
यक्षराक्षसनागाश्च पिशाचा मनुजास्तथा ॥४६॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च नृपसत्तम ।
ये चान्ये भूतसङ्घानां वर्णास्तांश्च विनिर्ममे ॥४७॥
ब्राह्मणानां सितो वर्णः क्षत्रियाणां च लोहितः ।
वैश्यस्य पीतको वर्णः शूद्राणामसितस्तथा ॥४८॥

मान्धातोवाच

चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभज्यते ।
सर्वेषां खलु वर्णानां दृश्यते वर्णसङ्करः ॥४९॥
कामः क्रोधो भयं लोभः क्षोभश्चिन्ता क्षुधा श्रमः ।
सर्वेषां नः प्रभवन्ति कस्माद् वर्णो विभज्यते ॥५०॥
स्वेदमूत्रपुरीषानि श्लेष्मा पित्तं सशोणितम् ।
तनुः क्षरति सर्वेषां कस्माद् वर्णो विभज्यते ॥५१॥
जङ्गमानामसंख्येया स्थावराणां च जातयः ।
तेषां विविधवर्णानां कुतो वर्णविनिश्चयः ॥५२॥

नारद उवाच

न विशेषोऽस्ति वर्णानां सर्वं ब्रह्ममयं जगत् ।
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम् ॥५३॥

---

४६b : दैत्या नर° D
४६d : पिशाचो D
४७b : भूपसत्तम D
५०b : श्रमाः F
५०c : न AF
: प्रभवति H
४९c-५०d : not found in G
५१c : स्रवति D
५१d : विभिद्यते ABFGH
५३b : °समं AB

कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः ।
त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः ।।५४।।
गोभ्यो वृत्तिं समास्थाय पीताः कृष्यनुजीविनः ।
स्वधर्मान् नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः ।।५५।।
हिंसानृतप्रिया लुब्धाः सर्वकर्मोपजीविनः ।
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः ।।५६।।
इत्येतैर्कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः ।
इत्येते चतुरो वर्णा येषां ब्राह्मी सरस्वती ।
विहिता ब्रह्मणा पूर्वं लोभादज्ञानतां गताः ।।५७।।
ब्राह्मणा धर्मतन्त्रस्थास्ततस्तेषां न नश्यति ।
ब्रह्म धारयतां नित्यं व्रतानि नियमांस्तथा ।।५८।।
ब्रह्मा चैव परं सृष्टं ये न जानन्ति तद्विदः ।
तेषां वहुविधास्त्वन्यास्तत्र तत्र हि जातयः ।।५९।।
पिशाचा राक्षसाः प्रेता विविधा म्लेच्छजातयः ।
प्रजा ब्राह्मणसंस्काराः स्वकर्मकृतनिश्चयाः ।।६०।।
ऋषिभिः स्वेन तपसा सृज्यन्ते चापरे परैः ।
आदिदेवसमुद्भूता ब्रह्ममूलाक्षयाव्यया ।
सा सृष्टिर्मानसी नाम धर्मतन्त्रपरायणा ।।६१।।

इति श्रीपद्मपुराणे स्वर्गखण्डे मान्धातृनारदसंवादे विश्वसृष्टिः पञ्चविंशतितमोऽध्यायः ।।२५।।

---

५६c : कृष्याः F
५७f : लोभात् AF
: लोभात् त्वज्ञानतां गताः G
: गता C
५८d : नियमं H
५९a : ब्रह्म G
५९c-६०d : nct found in C
६१e : मानुषीणां ABCFGH
पुष्पिका : इत्यादिमहापुराणे पाद्मे AF
मान्धातृ······संवादे not found in C
मान्धातृपाख्याने (for मान्धातृ······संवादे) FGH
e adds मान्धातुरुपाख्याने before विश्वसृष्टिः
पञ्चविंशो° A

## २६

मान्धातोवाच

ब्राह्मणः केन भवति क्षत्रियो वा द्विजोत्तम ।
वैश्यः शूद्राश्च देवर्षे तद् ब्रूहि वदतां वर ॥१॥

नारद उवाच

जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः ।
वेदाध्ययनसम्पन्नः षट्सु कर्मस्ववस्थितः ॥२॥
शौचाचारपरो नित्यं विघसाशी गुरुप्रियः ।
नित्यव्रती सत्यरतः स वै ब्राह्मण उच्यते ॥३॥
सत्यं दानमथाद्रोहोऽनृशंस्यं कृपाऽघृणा ।
तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ॥४॥
क्षत्रजं सेवते कर्म वेदाध्ययनसंयुतः ।
दानादानरतिर्यस्तु स वै क्षत्रिय उच्यते ॥५॥
विशत्याशु पशुभ्यश्च कृष्यादानरुचिः शुचिः ।
वेदाध्ययनसम्पन्नः स वैश्य इति संज्ञितः ॥६॥
सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः ।
त्यक्तवेदस्त्वनाचारः स वै शूद्र उदाहृतः ॥७॥

---

४a : अथ द्रोह° G अथाद्रोह° H
४b : अनृशंस° GH
५a : क्षेत्रज° AD
५b : °तत्परः G
४a-५d : repeated after ५d in e
६b : कृष्यादौ न रुचिः F
६d : कथ्यते G
७b : शुचिः F
७d : इति स्मृतः C

शूद्रे चैव भवेल्लक्ष्यं द्विजे चैव न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥८॥
सर्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः ।
पवित्रमेतज् ज्ञानानां नियमः स च संयमः ।
वार्यौ सर्वात्मना तौ हि श्रेयोघातार्थमुत्थितौ ॥९॥
नित्यं क्रोधाच्छ्रियं रक्षेत्तमो रक्षेदमर्षणात् ।
विद्यां मानावमानाभ्यामात्मानं तु प्रसादतः ॥१०॥
यस्य सर्वे समारम्भा निराशीर्बन्धना नृप ।
त्यागो यस्य हुतं सर्वं स त्यागी स च बुद्धिमान् ॥११॥
अहिंस्रः सर्वभूतानां मैत्रायणगतश्चरेत् ।
परिग्रहान् परित्यज्य भवेद् बुद्ध्या जितेन्द्रियः ॥१२॥
सत्यं ब्रह्म तपः सत्यं सत्यं विसृजते प्रजाः ।
सत्येन धार्यते लोकः स्वर्गं सत्येन गच्छति ॥१३॥
अनृतं तमसो रूपं तमसा नीयते ह्यधः ।
तमोग्रस्ता न पश्यन्ति प्रकाशं तमसावृताः ॥१४॥
स्वर्गः प्रकाश इत्याहुर्नरकं तम एव च ।
सत्यानृतं तदुभयं प्राप्यते जगतीचरैः ॥१५॥

---

८a : शूद्रो C
८c : भवेत् शूद्रो AF
९c : एतद् दानानां
१०a : क्रोधात् श्रियं AFH
: प्रियं C
११b : °वर्धना G
११c : तपो D
: शुभं C
१३d : सर्वं AC
१४d : प्रकाश्यं D
१५a : स्वर्गप्रकाश H

मान्धातोवाच

के धर्माः सर्ववर्णानां चातुर्वर्ण्यस्य के पृथक् ।
चातुर्वर्ण्याश्रमाणां च राजधर्माश्च के मताः ॥१६॥

नारद उवाच

अक्रोधः सत्यवचनं संविभागः क्षमा तथा ।
प्रजनः स्वेषु दारेषु शौचमद्रोह एव च ॥१७॥
आर्जवं भृत्यभरणं नवैते सार्ववर्णिकाः ।
ब्राह्मणस्य तु यो धर्मस्तं ते वक्ष्यामि केवलम् ॥१८॥
दममेव महाराज धर्ममाहुः पुरातनम् ।
स्वाध्यायाभ्यसनं चैव तत्र कर्म समाप्यते ॥१९॥
तं चेद् वित्तमुपागच्छेद् वर्तमानं स्वकर्मणि ।
अकुर्वाणं विकर्माणि शान्तं प्रज्ञानतर्पितम् ॥२०॥
कुर्वीतोपेत्य सन्तानमथ दद्याद् यजेत च ।
संविभज्यापि भोक्तव्यं धनं सद्भिरितीष्यते ॥२१॥
परिनिष्ठितकार्यस्तु स्वाध्यायेनैव ब्राह्मणः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥२२॥
क्षत्रियस्यापि यो धर्मस्तं ते वक्ष्यामि पार्थिव ।
दद्याद् राजा न याचेत यजेत न च याजयेत् ॥२३॥
नाध्यापयेदधीयीत प्रजाश्च परिपालयेत् ।
नित्योद्युक्तो दस्युवधे रणे कुर्यात् पराक्रमम् ॥२४॥

---

१६b : किं A
१६c : तु A
२०a : °गच्छेत् A
२०b : वर्तमाने G
२०c : विकुर्वाणि A
२०d : श्रान्तं D
२१d : वितीर्यते GH
२२c : अन्यत्र वा A
२३d : न यजेत C

ये तु क्रतुभिरीजानाः श्रुतवन्तश्च पार्थिवाः ।
ये तु युद्धे विजेतारस्ते तु लोकजितो नृपाः ॥२५॥
अविक्षतशरीरो हि सङ्गराद् यो निवर्तते ।
क्षत्रियस्य तु तत्कर्म नोभयत्र यशःप्रदम् ॥२६॥
क्षत्रियाणामयं धर्मो निर्णीतो मुनिभिः परः ।
नास्य कृत्यतमं किञ्चिद् राज्ञो दस्युविनिग्रहात् ॥२७॥
दानमध्ययनं यज्ञो राज्ञां क्षेमोऽभिधीयते ।
तस्माद् राज्ञा महाराज योद्धव्यं धर्मशालिना ॥२८॥
प्रजाः स्वेषु च धर्मेषु स्थापयेत महीपतिः ।
धर्माण्येव हि कर्माणि कारयेत् सततं प्रजाः ॥२९॥
परमां सिद्धिमाप्नोति नृपतिः परिपालनात् ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो राजन्य उच्यते ॥३०॥
वैश्यस्य च प्रवक्ष्यामि यो धर्मो वेदसम्मतः ।
दानमध्ययनं शौचं यज्ञश्च धनसञ्चयः ॥३१॥
पालयेच्च पशून् वैश्यः पितृवद् धर्ममर्जयन् ।
विकर्म तद् भवेदन्यत् कर्म यत् स समाचरेत् ॥३२॥
रक्षया स हि तेषां वै महत्सुखमवाप्नुयात् ।
प्रजापतिर्हि वैश्यस्य सृष्ट्वा परिददे प्रजाः ॥३३॥

---

२५d : लोकायता H
२७d : राज्ञे G
२८b : विधीयते AF
२८d : °शीलिना GH
२९a : येषु D
२९b : स्थापयेत् स H
३०c : अन्यत्र वा A
३०d : ब्राह्मण A
३३c : वैश्याय H
३३d : सृष्टाः F

ब्राह्मणेभ्यश्च राज्ञे च सर्वाः परिददे प्रजाः ।
तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम् ॥३४॥

षण्णामेकां पिबेद्धेनुं शताच्च मिथुनं हरेत् ।
लब्ध्वा च सप्तमं भागं तथा शृङ्ग्येकलक्षुरे ॥३५॥

सस्यानां सर्वबीजानि एषा सांवत्सरी भृतिः ।
न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति ॥३६॥

वैश्ये रक्षति नान्येन रक्षितव्याः कथञ्चन ।
शूद्रस्यापि हि यो धर्मस्तं ते वक्ष्यामि भूपते ॥३७॥

प्रजापतिर्हि वर्णानां दासं शूद्रमकल्पयत् ।
तस्माच्छूद्रस्य वर्णानां परिचर्या विधीयते ॥३८॥

तेषां शुश्रूषणाच्चैव महत् सुखमवाप्नुयात् ।
शूद्र एतान् परिचरेत् त्रीन्वर्णाननुपूर्वशः ॥३९॥

सञ्चयांश्च न कुर्वीत जातु शूद्रः कथञ्चन ।
पापीयान् हि धनं लब्ध्वा वशे कुर्याद् गरीयसः ॥४०॥

राज्ञा वा समनुज्ञातः कामं कुर्वीत धार्मिकः ।
तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम् ॥४१॥

---

३४a : राज्ञेवै H
३५b : भवेत् C
३५c : लब्धाच्च CD लब्धाश्च H
: सप्तमो G
३५d : °ऐकलक्षुरे G
३७a : वैश्ये नेच्छति AeFGH
३७d : भूमिप A
३८c : तस्मात् शूद्रस्य ABF
३९a : शुश्रूषणं CD
४१d : तच्चोप°

अवश्यं भरणीयो हि वर्णानां शूद्र उच्यते ।
छत्रं वेष्टनमौशीरमुपानद्व्यजनानि च ।
यातयामानि देयानि शूद्राय परिचारिणे ॥४२॥
अधार्याणि विशीर्णानि वसनानि द्विजातिभिः ।
शूद्रायैव प्रदेयानि तस्य धर्मधनं हि तत् ॥४३॥
यश्च कश्चिद् द्विजातीनां शूद्रः शुश्रूषुराव्रजेत् ।
कल्पान्तस्य तु तेनाहुर्वृत्तिं धर्मविदो जनाः ॥४४॥
देयः पिण्डोऽनपत्याय भर्तव्यौ वृद्धदुर्बलौ ।
शूद्रेण न च हातव्यो भर्ता कस्याञ्चिदापदि ॥४५॥
अतिरेकेण भर्तव्यो भर्त्रा द्रव्यपरिक्षये ।
न हि स्वमस्ति शूद्रस्य भर्तृहार्यधनो हि सः ॥४६॥
उक्तस्त्रयाणां वर्णानां यज्ञस्तस्य च पार्थिव ।
स्वाहाकारवषट्कारौ मन्त्रः शूद्रे न विद्यते ॥४७॥
तस्माच्छूद्रः पाकयज्ञैर्याजयेत न च स्वयम् ।
पूर्णपात्रमयीमाहुः पाकयज्ञस्य दक्षिणाम् ॥४८॥
अतो हि सर्ववर्णानां यज्ञस्तस्यैव पार्थिव ।
अग्रे सर्वेषु यज्ञेषु श्रद्धायज्ञो विधीयते ॥४९॥
दैवतं हि महच्छ्रद्धा पवित्रं यजतां च तत् ।
दैवतं परमं विप्राः स्वेन स्वेन परस्परम् ॥५०॥

---

४३c : शूद्राय हि A
४५bc : not found in G
४६b : भर्ता H
४७c-४९b : not found in AF
४७c : °कारो H
४९c : अत्र C
५०a : महत् श्रद्धा AF महद् ब्रह्मन् D
५०b : हि तत् F

अयजन्निह सत्रैस्ते तैस्तैः कामैः सनातनैः ।
संसृष्टा ब्राह्मणैरेव त्रिषु वर्णेषु सृष्टयः ॥५१॥
देवानामपि ये देवा यद् ब्रूयुस्ते परं हितम् ।
तस्माद् वर्णैः सर्वयज्ञाः संसृज्यन्ते न काम्यया ॥५२॥
ऋग्यजुः सामवित् पूज्यो नित्यं स्याद् देववद् द्विजः ।
अनृग्यजुरसामा च प्राजापत्य उपद्रवः ॥५३॥
यज्ञो मनीषया तात सर्ववर्णेषु कीर्त्यते ।
नास्यायज्ञकृतो देवा ईहन्ते नेतरे जनाः ।
तस्मात् सर्वेषु वर्णेषु श्रद्धायज्ञो विधीयते ॥५४॥
स्वं दैवतं ब्राह्मणः स्वेन नित्यं
परान् वर्णान् याजयन् नैवमासीत् ।
अवरोवितान् संसृष्टो वैश्यो
ब्राह्मणस्त्रिषु वर्णेषु यज्ञसृष्टः ॥५५
आराधितो ब्राह्मणः संशितात्मा
तस्माद् विद्वांस्त्रिषु वर्णेषु सृष्टः ।
तस्माद् वर्णा ऋजवो ज्ञातिवर्गाः
संसृज्यन्ते तस्य विकार एव ॥५६॥

---

५१c : संदृष्ट्वा ABF
५१d : वर्णेषु not found in G
: स्विष्टयः A
५२d : समीज्यन्ते A
५४ : A reads cd first, then ab
५४a : तेषु (for तात) D
५४c : यज्ञकृता F
५५a : ब्राह्मण H
५५b : याजयेत् D
५५d : यज्ञः सृष्टः A
५६a : आराधिता CD आराधिता ब्रह्मणः BH
५६b : तस्माद् not found in D

एकं साम यजुरेकमृगेका ।
विप्रश्चैको निश्चये तेषु सृष्टः ॥५७॥
अथ गाथा यज्ञपतेः कीर्तयन्ति पुराविदः ।
वैखानसानां राजेन्द्र मुनीनां यष्टुमिच्छताम् ॥५८॥
उदितेऽनुदिते वापि श्रद्दधानो जितेन्द्रियः ।
वह्निं जुहोति धर्मेण श्रद्धा वै कारणं महत् ॥५९॥
द्विजातिः श्रद्धयोपेतः स यष्टुं पुरुषोऽर्हति ।
स्तेनो वा यदि वा पापो यदि वा पापकृत्तमः ॥६०॥
यष्टुमिच्छति यज्ञं यः साधुमेव वदन्ति तम् ।
ऋषयस्तं प्रशंसन्ति साधु चैतदसंशयम् ॥६१॥
सर्वदा सर्वथा वर्णैर्यष्टव्यमिति निश्चयः ।
न हि यज्ञसमं किञ्चित् त्रिलोकेषु विद्यते ॥६२॥
तस्माद् यष्टव्यमित्याहुः पुरुषेणानसूयता ।
श्रद्धापवित्रमाश्रित्य यथाशक्ति प्रयच्छता ॥६३॥

इति श्रीपद्मपुराणे स्वर्गखण्डे वर्णविभागो नाम षड्विंशतितमोऽध्यायः ॥२६॥

---

५७a : एकं सामा A एकं सामं F
५७b : विप्राश्चैकनिश्चयास्तेषु सृष्टाः A
५९c : वह्नि CDH
पुष्पिका : इत्यादिमहापुराणे पाद्मे AF
नाम not found in C
षड्विंशो° C

# २७

नारद उवाच

इदानीमाश्रमाणां च धर्मं वक्ष्यामि भूमिप ।
ब्रह्मचर्याश्रमं तावच्छृणु सर्वाधिवासनम् ॥१॥
गत्वा गुरुगृहं शिष्यो नमस्कृत्य गुरुं शुचिः ।
ब्रूयादध्येतुमायातः शिष्योऽहं तव मारिष ॥२॥
ततस्तस्याज्ञया नित्यमध्येतव्यं नराधिप ।
सदा विचारः शास्त्रस्य गुरुपादाभिवादनम् ॥३॥
तदाज्ञापालनं चापि ध्यानं दैवतभावना ।
लाभेन येन केनापि तुष्टिः सद्भिः समागमः ॥४॥
समाप्तविद्यो गुरवे दक्षिणां प्रतिपाद्य च ।
गृहाश्रमं ततो गच्छेद् गुरोराज्ञामधिव्रजन् ॥५॥
उद्वहेत् कुलजां कन्यां सुशीलां धर्मचारिणीम् ।
अनहंवादिनीं सौम्यां सुचरित्रां प्रियंवदाम् ॥६॥
गृहिणां प्रथमो धर्मोऽतिथिपूजैव पार्थिव ।
अप्राप्य पूजामतिथिर्यस्य गेहान् निवर्तते ॥६॥
स याति नरकं घोरं पुण्यं तस्मै प्रदाय च ।
प्रथमं स्वागतं पृच्छेदासनं चापि संदिशेत् ॥८॥
पाद्यं च मधुपर्कं च दद्यात् प्रणतिपूर्वकम् ।
संवादं च प्रियालापं कुर्यात् तेन सहान्ततः ॥९॥

---

श्रीनारद उवाच C
१a : आश्रयाणां च ACeF
१cd : तावत् शृणु FGH
५c : गच्छेत् eF
९d : समन्ततः AF

भोजनं च यथाशक्ति कारयेदतिथिं नृप ।
देवाश्च पितरश्चापि प्रीयन्तेऽतिथिपूजने ॥१०॥
आतिथ्यसदृशं कर्म गृहस्थानां न विद्यते ।
यस्य नित्यं स्थितिर्नास्ति सोऽतिथिः परिकीर्त्तितः ॥११॥
सर्वाश्रमाणामधिको गृहाश्रम उदाहृतः ।
यस्मात् तस्मिन् समायान्ति भिक्षार्थमाश्रमास्त्रयः ॥१२॥
पितृदेवार्चनं कार्यं गृहिणा सुखमिच्छता ।
वानप्रस्थाश्रमं वक्ष्ये तृतीयं जगतीपते ॥१३॥
वानप्रस्थाश्रमं गच्छेत् कृतकृत्यो गृहाश्रमात् ।
तदारण्यकशास्त्राणि समधीत्य स धर्मवित् ॥१४॥
ऊर्ध्वरेताः प्रव्रजित्वा गच्छत्यक्षरसात्मताम् ।
सुते भार्यां परिन्यस्य वनं गच्छेत् सहैव वा ॥१५॥
शान्तः शुद्धान्तरात्मा च सर्वभूतहिते रतः ।
चरितब्रह्मचर्यस्य ब्राह्मणस्य विशांपते ॥१६॥
कर्तव्यानीह राजेन्द्र कथ्यन्ते मुनिपुङ्गवैः ।
भैक्ष्यचर्यास्वधीकारः प्रशस्त इह मोक्षिणः ॥१७॥
यत्रास्तमिह शायी स्यान् निरग्निरनिकेतनः ।
यथोपलब्धजीवी स्यान्मुनिर्दान्तो जितेन्द्रियः ॥१८॥
निराशीः स्यात् सर्वसमो निर्योगो निर्विकारवान् ।
विवेकी धनपुत्रादौ वितृष्णः करुणः सदा ॥१९॥
संसारं स्वप्नवद् वीक्ष्य क्षान्तः सन्तुष्टमानसः ।
पत्रमूलफलाहारो जलाशी वायुभोजनः ॥२०॥

---

१४d : यमधीत्य C
१५b : गच्छेद् G
: °सात्वतां F
१६a : सर्व not found in H
: °सहो D
२०c : °फलाहारी e

निराहारोऽथवा शुद्धोऽहर्निशं तप आचरेत् ।
एवं कुर्वन् महाभाग ब्राह्मणः सिद्धिमाप्नुयात् ॥२१॥

चतुर्थमाश्रमं वक्ष्ये मुक्तिसोपानमेव हि ।
गुरोः प्रबोधमासाद्य भिक्षुः सन्न्यासधर्मवित् ॥२२॥

विचरेत् सकलां पृथ्वीं लब्धाशीः शान्त उत्सुकः ।
योगाभ्यासरतो नित्यं धर्मसञ्चयतत्परः ।
धर्माधर्मविहीनो वा भिक्षुकः सिद्धिमाप्नुयात् ॥२३॥

मान्धातोवाच

किमेतत् कथितं ब्रह्मन् बुद्ध्यते न मया खलु ।
पुनः कथय विस्तार्य धर्माधर्मौ कथं त्यजेत् ॥२४॥

नारद उवाच

द्विविधो योगमार्गोऽयं ज्ञानं कर्म च भूमिप ।
द्वावङ्गौ ज्ञानयोगस्य यमो नियम एव च ॥२५॥

कर्मयोगस्य कथ्यन्ते षडङ्गानि नराधिप ।
आसनं प्राणनियमो द्वावेतौ देहशोधनौ ॥२६॥

प्रत्याहारस्तथा ध्यानं धारणा पञ्चमी स्मृता ।
षष्ठः समाधिरेतानि योगाङ्गानि यथाक्रमम् ॥२७॥

द्वावङ्गौ ज्ञानयोगस्य श्रूयतामादितो नृप ।
किं ब्रह्म किं न तद् वेति भावना निविडा सदा ॥२८॥
कारणालोकनं नित्यं यम एष उदाहृतः ।
अहिंसा समता तुष्टिः सर्वेषामुपकारिता ॥२९॥

---

२३c : योगाभ्यासवदो eD
२४d : त्यजेत् कथम् G
२५a : अयं not found in A
२८d : तदा e

दया समस्तभूतेषु भक्तिरव्यभिचारिणी ।
सर्वं ब्रह्मेति नियमो नियमः कथितस्तव ॥३०॥
इदानीमासनं वक्ष्ये श्रूयतां जगतीपते ।
वामोरूपरि संस्थाप्य दक्षिणं चरणं दृढम् ॥३१॥
दक्षिणोरौ तथा वामं विन्यस्य चिबुकं हृदि ।
पादाङ्गुष्ठौ व्युत्क्रमेण हस्ताभ्यां पृष्ठतो दधत् ॥३२॥
नासाग्रदृष्टिः सन्न्यासी यदि वायुं विवर्धयेत् ।
तदेतन् मुनिभिः प्रोक्तं कमलासनमुत्तमम् ॥३३॥
वामपार्ष्णिं गुदे न्यस्य पश्चादुपरिवेष्टितौ ।
करौ कृत्वा महाराज साङ्गुली विरलीकृतौ ।
स्वस्तिकासनमेतत् तु सर्वव्याधिविनाशनम् ॥३४॥
अण्डाधो निहितौ पार्ष्णी जानु संस्थाप्य भूतले ।
तिष्ठेद् ध्यायन् जपन् मन्त्रं तद् भद्रासनमुच्यते ॥३५॥
अधोमूर्धानमध्यास्य चरणावूर्ध्वगौ कृतौ ।
एतदूर्ध्वासनं सिद्धिप्रदं रोगविनाशनम् ॥३६॥
अष्ठीवती समीकृत्य चरणौ पार्श्वयोर्न्यसेत् ।
यदि गोमुखमेतत् तु तदासनमुदाहृतम् ॥३७॥
अन्यानि बहुशः सन्ति कूर्माद्यान्यासनानि च ।
रोगनाशनकारीणि मृत्युहारीणि योगिनाम् ॥३८॥
प्राणायामं महाराज शृणु रोगप्रणाशनम् ।
सर्वसिद्धिकरं हृद्यं तारुण्यबलवर्धनम् ॥३९॥

---

३१c : वामोरौ A
३४ab : not found in G
३४f : °विनाशिनी e
३५a : अण्डाधौ ACeG
३५c : जगन्मन्त्रं G
३६b : योग° G

प्राणोऽपानः समानश्च व्यानश्चोदान एव च ।
नागश्च ऋकरश्चैव देवदत्तो धनञ्जयः ।
कूर्मश्च वायवः ख्याता दशैते देहमध्यगाः ॥४०॥
हृदि प्राणो गुदेऽपानो नाभिदेशे समानकः ।
व्यानस्तु सर्वनाडीषु स्थितः पुष्टिविवर्धनः ॥४१॥
उदानः कण्ठमध्यस्थो रसमादाय यच्छति ।
नाग एतांस्तु गृह्णाति शिरस्थः श्येनरज्जुवत् ॥४२॥
अपानाधः स्थितः कूर्म उन्मीलयति तानितः ।
जृम्भनं कुरुते तात देवदत्तो हृदि स्थितः ॥४३॥
धनञ्जयश्च तत्रैव द्वौ समादाय वक्षसि ।
क्षवथुं कुरुते राजन् कृकरो जठरस्थितः ॥४४॥
मुखनासिकयोर्मध्ये वायुश्चलति सर्वदा ।
स प्राण इति राजेन्द्र वायूनां परमः स्मृतः ॥४५॥
मध्ये सुषुम्ना तन्मध्ये सुसूक्ष्मा चित्ररूपिणी ।
तत्रात्मा वह्निरूपेण नित्यानन्दः प्रवर्तते ॥४६॥
सप्तपद्मानि तत्रैव सन्ति लोका इव प्रभो ।
गुदे पृथ्वीमयं चक्रं हरिद्वर्णं चतुर्दलम् ॥४७॥
लिङ्गे तु षट्कुलं चक्रं स्वाधिष्ठानमिति स्मृतम् ।
त्रिलोकं वह्निनिलयं तप्तचामीकरप्रभम् ॥४८॥

---

४२a : °मध्ये तु C
४२b : गच्छति C
४२d : °वज्रवत् CD °वक्रवत् B
४४c : क्षुवथुं F
४७b : इति AF
४७c : °समं C
४७d : च दुर्वलं G
४८a : त्वष्ट° DG
४८d : सप्त° D

नाभौ दशदलं चक्रं कुण्डलिन्या समन्वितम् ।
नीलाञ्जननिभं ब्रह्मस्थानं पूर्वकमन्दिरम् ।।४९।।

मणिपूराभिधं स्वच्छं जलस्थानं प्रकीर्तितम् ।
उद्यदादित्यसङ्काशं हृदि चक्रमनाहतम् ।।५०।।

कुम्भकाख्यं द्वादशारं वैष्णवं वायुमन्दिरम् ।
कण्ठे विशुद्धचरणं द्वादशारं पुरोदरम् ।।५१।।

शाम्बरीवरचक्राख्यं चन्द्रबिन्दुविभूषितम् ।
षष्ठं ज्ञानमयं चक्रं द्विदलं श्वेतमुत्तमम् ।।५२।।

धाराचक्रमिति ख्यातं मनःस्थानं प्रकीर्तितम् ।
सहस्रदलमेकारं परमात्मप्रकाशकम् ।।५३।।

नित्यं ज्ञानमयं सत्यं सहस्रादित्यसन्निभम् ।
षट्चक्राणीह भेद्यानि नैतद् भेद्यं कथञ्चन ।।५४।।

चन्द्रेणापूर्य पवनं कुम्भयेत् तु चतुर्गुणम् ।
तदर्धं रेचयेद् वर्णैस्तदा भवति निज्वरः ।।५५।।

मूलबन्धं तथा कुर्यात् चन्द्रसूर्यात्मके शिरे ।
एवं कृत्वा ततो वायुमूर्ध्वमाकृष्यते यदि ।
मूलबन्ध इति प्रोक्तस्तदैष ज्वरनाशनः ।।५६।।

---

५०a : मणिपुरा° AC
५०b : जन° C
५०c-५३b : not found in G
५२c-५४b : not found in AF
५२c : °आज्ञामयं H
५४d : वेदां AC
५५a : चक्रेणा° C
५५d : निर्जरः CDGH
५६f : जर° C

केवलं सूर्यमाकृष्य यदि वायुं निरुन्धयेत् ।
उड्डियानस्तदा बन्धो भवेन्मृत्युविनाशनः ॥५७॥
केवलं चन्द्रमाकृष्य कण्ठे वायुं निरुन्धयेत् ।
यदि जालन्धरो बन्धस्तदा भवति पुष्टिदः ॥५८॥
ऊर्ध्वे जिह्वां समानीय ध्यात्वा चन्द्रमयं परम् ।
सहस्रारं महापद्मं हंसमन्त्रेण चेत् पिबेत् ॥५९॥
अमृतं वह्निमार्गं च रोधयित्वा स्ववायुना ।
भ्रूमध्ये कृतपुष्टिश्च यदि ध्यानरतो भवेत् ॥६०॥
तदैषा खेचरी मुद्रा सर्वसिद्धिप्रदायिनी ।
जरामृत्युप्रशमनी सर्वरोगविनाशिनी ॥६१॥
क्षुधाप्रशमनी हृद्या सर्वाह्लादविधायिनी ।
सर्वसम्मोहिनी चैव नित्यं तारुण्यकारिणी ॥६२॥
इदानीं ते प्रवक्ष्यामि प्रत्याहारविधिं नृप ।
यथा विवस्वान् विस्तार्य पुनः संहरते प्रभाम् ।
इन्द्रियाणि यथा योगी प्रत्याहरति चात्मनि ॥६३॥
कूर्मोऽङ्गानि यथा तानि पुनः सङ्कोचमाचरेत् ।
इन्द्रियाणि तथाङ्गानि प्रत्याहरति पार्थिव ॥६४॥
यद्यच्छृणोति कर्णाभ्यां प्रियं वाप्यप्रियं नृपः ।
शब्दं तमात्मना ध्यात्वा प्रत्याहरति योगवित् ॥६५॥

---

५८b : निबन्धयेत् D
६१d : °प्रणाशिनी G
६२b : सर्व not found in G
६२c : सम्मोहनी H
६५a : यद् यत् H

हेतुस्तत्रापि बोधव्यः कः शब्दः किं समाचरेत् ।
कृतप्रयोगशब्दस्तु विनाशी तत्क्षणादभूत् ॥६६॥
प्रियाप्रियौ कथं चात्र भ्रमोऽयं लोकचारतः ।
किं प्रियेण भवेत् साध्यं कटुना किं न वा भवेत् ॥६७॥
अविनाशी यतः स्वात्मा नित्यः शब्दस्तु भूमिप ।
तस्मादत्र भ्रमो नैव कर्तव्यः सुसमाहितः ॥६८॥
रूपाद् विग्रहणं चैव विनाश्यं परिवर्जयेत् ।
भाव्यं ब्रह्मैव सततं नित्यानन्दं निरञ्जनम् ॥६९॥
अद्वैतज्ञानविषयं निर्गुणं गुणभोक्तृ च ।
द्वैतभ्रमो न कर्तव्यः सत्यमेकं निरञ्जनम् ॥७०॥
धेनूनां बहुवर्णानामेकवर्णं यथा पयः ।
एकध्यानं तु जीवानामात्मैव परमेश्वरः ॥७१॥
सूर्यो यथैको बहुधा दृश्यते दर्शनादिषु ।
तथा हि परमात्मा वै नानात्वे गृह्यते जनैः ॥७२॥
एकस्मात्तु यथा दीपात् सम्भवन्ति सहस्रशः ।
भवेन्नापचयस्तस्य तथेदं विश्वमद्भुतम् ॥७३॥
अस्मिन् देहेऽहमेवेति कस्य नाम विचिन्तयेत् ।
को वा किं कुरुते पापं पुण्यं वा कुरुते कथम् ॥७४॥
आत्मनो वै पदश्चिह्नं न किञ्चिदुपलभ्यते ।

---

६७a : °प्रियं A
६७b : मोहोऽयं लोक° D
६८d : सुसमाहितैः F
६९ a : रूपादिग्रहणं CGH
६९b : विनाशं D
७०a-d : not found in AF
७०b : पुण्यभोक्तृ D
७१c : एव° (for एक°) D
७२a : वपुषा C
७२c : यथा A
७५a : °छिद्रं C

अतस्ते कथितं पूर्वं पापपुण्यविवर्जितम् ॥७५॥
योगी भवति विश्वात्मा अहङ्कारक्षयान्नृप ।
धर्माधर्मौ न विद्येते त्यक्ताहङ्कारयोगिनः ॥७६॥

अहङ्कारः परः शत्रुस्तं यत्नेन विवर्जयेत् ।
अनहङ्कारिता धैर्यं सन्तोषो येन केनचित् ॥७७॥

ज्ञानस्य धारणैषा तु सर्वसिद्धिप्रदायिनी ।
सम्प्रीतिः सर्वभूतानां कथिता कर्मधारणा ॥७८॥

आत्मकोऽहमिति ज्ञानं कैवल्यपददायकम् ।
सुखदुःखे यदा त्यक्त्वा सुस्थो भवति योगवित् ॥७९॥

मानापमानयोस्तुल्यः स्पष्टमात्रविभावनः ।
भावनानन्दसम्पूर्णः समाधिः कथ्यते बुधैः ॥८०॥

इति श्रीपद्मपुराणे स्वर्गखण्डे मान्धातृनारदसंवादे योगकथनं नाम सप्तविंशतितमोऽध्यायः ॥२७॥

---

७५c : तं C
७५d : °विवर्जित: ABCG
७६b : अहङ्कारक्षयात् प्रिये ABCFG अहङ्कारविवर्जितः H
७७b : विसर्जयेत् CGH
७९a : आत्मा कोऽहं DG
८०a : तस्य ACF
पुष्पिका : इत्यादिमहापुराणे पाद्मे A

मान्धातोवाच

वर्णाश्रमविधेस्तत्त्वं श्रुतं मे भवतो मुने ।
योगज्ञानं च यत् प्रोक्तं तन्मन्ये दुष्करं महत् ॥१॥

शिवान् सुखान् महोदर्कानहिंस्रान् लोकसम्मतान् ।
ब्रूहि धर्मान् सुखोपायान् मद्विधानां सुखावहान् ।
निषिद्धमपि यद् येषां तदेव प्रथमं वद ॥२॥

नारद उवाच

ज्याकर्षणं शत्रुनिवर्हणं च
कृषिर्वणिज्या पशुपालनं च ।
शुश्रूषणं चापि तथार्थहेतो-
रकार्यमेतत् परमं ब्राह्मणस्य ॥३॥

सेव्यं तु ब्रह्मषट्कर्म गृहस्थेन मनीषिणा ।
कृतकृत्यस्य चारण्ये वासो विप्रस्य शस्यते ॥४॥

राजप्रैष्यं कृषिधनं जीवनं च वणिज्यया ।
कौटिल्यं कौलटेयं च कुसीदं च विवर्जयेत् ॥५॥

शूद्रो राजन् स भवति धर्मापेतो दुराचरः ।
वृषलीं रमते यस्तु पिशुनो नर्तनस्तथा ॥६॥

---

१a : °विधिस्त्वत्तः GH
२b : अहिंसान् GH
३b : वाणिज्या F
५a : कृषीवलं D
५c : कोटलीयं च F कोलटीयं च GH
६d : नर्त्तकस्तथा D

ग्रामप्रेष्यो विकर्मा च यो द्विजश्चरिताच्च्युतः ।
वेदानपि जपञ्छूद्रैः समः स परिकीर्तितः ।
कृत्येषु वर्जनीयोऽसौ वैदिके तान्त्रिकेऽपि च ॥७॥

निर्मर्यादे चाशुचौ क्रूरवृत्ते
हिंसात्मके त्यक्तधर्मे स्ववृत्ते ।
हव्यं च कव्यं च न देयमेव
दानं च दत्तं विफलं नरेन्द्र ॥८॥

तस्माद् धर्मो ब्राह्मणस्यैव राजञ्-
छौचं दमश्चार्जवं चापि सत्यम् ।
तथाश्रमास्तस्य सर्वे हि योग्याः
पुरा ते ते ब्रह्मणा वै विसृष्टाः ॥९॥

यः स्याद् दान्तः सोमपश्चार्यशीलः ।
सानुक्रोशः सर्वसहो निराशी ।
ऋजुर्मृदुरनृशंसः क्षमावान्
स वै विप्रो नेतरः पापकर्मा ॥१०॥

राजन्यानां करादानं विना वैवाहिकं च यः ।
प्रतिग्रहः सनिन्दोऽत्र परत्र चासुखप्रदः ॥११॥

---

७c : जपन् शूद्रैः FGH
७f : दैविके B
९ab : राजन् शौचं FGH
९d : ब्राह्मणाः H
१०a : चानुशीलः CDF
१०b : सर्वसत्वो C
११b : वैवहिकं F
११c : सनिन्दात्र GH
११d : परतः D

युद्धे पलायनं चैव तथा कातरतार्थिषु ।
अपालनं प्रजानां च दाने धर्मे विरक्तता ॥१२॥
अनवेक्षा स्वराष्ट्रस्य ब्राह्मणानामनादरः ।
अमात्यानामसम्मानं तेषां कर्मानवेक्षणम् ।
भृत्यानां च परीहासो निषिद्धः क्षत्रजन्मनाम् ॥१३॥
वैश्यानां धनलोभेन मिथ्यामूल्यप्रकाशनम् ।
अपालनं पशूनां च अनिज्या विभवे सति ॥१४॥
शूद्राणां च महाराज वृथैव धनसञ्चयः ।
शुश्रूषोः कृतकार्यस्य कृतसन्तानकर्मणः ॥१५॥
अभ्यनुज्ञातराजस्य शूद्रस्य जगतीपते ।
अल्पान्तरगतस्यापि दशधर्मगतस्य च ॥१६॥
आश्रमा विहिताः सर्वे वर्जयित्वा निराशिषम् ।
भैक्ष्यचर्यां ततः प्राहुस्तस्य तद्धर्मचारिणः ॥१७॥
तथा वैश्यस्य राजेन्द्र राजपुत्रस्य चैव हि ।
कृतकृत्यो वयोऽतीतो राज्ञः कृतपरिश्रमः ॥१८॥
वैश्यो गच्छेदनुज्ञातो नृपेणाश्रमसंश्रयम् ।
राजन्यस्तु महाराजो यथाश्रममवाप्नुयात् ॥१९॥
तच्छृणुष्व तवाख्यास्ये धर्मसंग्रहतत्परः ।
वेदानधीत्य धर्मेण राजशास्त्राणि चानघ ॥२०॥
सन्तानादीनि कर्माणि कृत्वा सोमं निषेव्य च ।
पालयित्वा प्रजाः सर्वा धर्मेण यजतां वर ॥२१॥

---

१४a : धर्म° CeFG
१४d : वणिज्या D
१६a : °राज्यस्य BCFH
१७c : भक्ष° F
१९b : °संश्रवम् B
२०a : तत् शृणुष्व CeFH
२१d : वदतां BF

राजसूयाश्वमेधादीन् मखानन्यांस्तथैव च ।
आनयित्वा यथापाठं विप्रेभ्यो दत्तदक्षिणः ॥२२॥
संग्रामे विजयं प्राप्य तथाल्पं यदि वा बहु ।
स्थापयित्वा प्रजापालं पुत्रं राज्ये च पार्थिव ॥२३॥
अन्यगोत्रं प्रशस्तं वा क्षत्रियं क्षत्रियर्षभ ।
अर्चयित्वा पितॄन् सम्यक् पितृयज्ञे यथाविधि ॥२४॥
देवान् यज्ञैर्ऋषीन् वेदैरर्चयित्वा च यत्नतः ।
अन्तकाले च संप्राप्ते य इच्छेदाश्रमान्तरम् ॥२५॥
सोऽनुपूर्व्याश्रमान् राजन् गत्वा सिद्धिमवाप्नुयात् ।
राजर्षित्वेन राजेन्द्र भैक्ष्यचर्याध्वसेवया ।
अपेतगृहधर्मोऽपि चरेज्जीवितकाम्यया ॥२६॥
न चैतन्नैष्ठिकं कर्म त्रयाणां भूरिदक्षिणम् ।
चतुर्णां राजशार्दूल प्राहुराश्रमवासिनाम् ॥२७॥
बह्वायत्तं क्षत्रियैर्मानवानां
लोकश्रेष्ठं धर्ममासेवमानैः ।
सर्वे धर्माः सोपधर्मास्त्रयाणां
राज्ञो धर्मादिति वेदाच्छृणोति ॥२८॥
एवं धर्मान् राजधर्मेषु सर्वान्
सर्वावस्थं सम्प्रलीनान् निबोध ।
अल्पाश्रयानल्पफलान् वदन्ति
धर्मानन्यान् वेदविदो मनुष्याः ॥२९॥

---

२६d : भैक्ष॰ G
२६f : यावज्जीवित॰ C
२८a : वाहयेत् तं F वाह्वायत्तं B
२८d : वेदात् शृणोति C वेदात् शृणोमि eFH वेदाच्छृणोमि G
२९b : ॰प्रणीतान् D
२९c : अन्याश्रमान् D

महाश्रयं बहुकल्याणरूपं
क्षात्रं धर्मं नेतरं प्राहुरार्याः ।
सर्वे धर्मा राजधर्मप्रधानाः
सर्वे धर्माः पाल्यमाना भवन्ति ॥३०॥
सर्वत्यागो राजधर्मेषु राजंस्-
त्यागं धर्मं चाहुरग्र्यं पुराणम् ।
मज्जेत् त्रयी दण्डनीतौ हतायां
सर्वे धर्माः प्रक्षयेयुर्विरुद्धाः ॥३१॥
सर्वे धर्माश्चाश्रमाणां हताः स्युः
क्षात्रे त्यक्ते राजधर्मे पुराणे ।
सर्वे त्यागा राजधर्मेषु चोक्ताः
सर्वा विद्या राजधर्मेषु युक्ताः ॥३२॥
सर्वे लोका राजधर्मे प्रविष्टाः
यथा जीवाः प्राकृतैर्बध्यमानाः ।
धर्मः श्रुतानामुपपीडनाय
एवं धर्मा राजधर्मैर्वियुक्ताः ॥३३॥
चतुराश्रमधर्माश्च यतिधर्माश्च पार्थिव ।
लोकवेदोत्तराश्चैव क्षात्रे धर्मे समाहिताः ॥३४॥
सर्वाण्येतानि धर्माणि क्षात्रे राजन्यसत्तम ।
अप्रत्यक्षं बहुद्वारं धर्ममाश्रमवासिनाम् ।
क्षात्रेणैव हि धर्मेण प्रत्यक्षं क्रियते नृप ॥३५॥

इति श्रीपद्मपुराणे स्वर्गखण्डे क्षात्रधर्मप्रशंसानाम अष्टाविंशतितमोऽध्यायः ॥२८॥

---

३०d : चरन्ति C
३२d : not found in G
३३bc : °मानाः धर्मः not found in G
३३c : धर्माश्रितानां D
३३d : विमुक्ताः F
३४abc : not found in B
eFG add संश्रृण्वन्तो नाद्रियन्ते स्वधर्मं before ३४a
३४c : चतुराश्रम्य° GH
पुष्पिका : नामाष्टाविंशोऽध्यायः F
The whole chapter is not found in A

## २६

मान्धातोवाच

सदाचारं तु वर्णानां श्रोतुमिच्छामि नारद ।
आचारः सर्ववर्णानां धर्मेषु कारणं परम् ॥१॥

नारद उवाच

आह्निकं ते प्रवक्ष्यामि श्रुतं मे शूलपाणिना ।
यच्छ्रुत्वा तु नरो राजन् धर्ममार्गे प्रवर्तते ॥२॥

ब्राह्मे मुहूर्ते उत्थाय ब्रह्मरन्ध्रस्थपङ्कजे ।
शुभ्रे सहस्रपत्रे च निर्मले ग्लानिवर्जिते ॥३॥

रात्रिवासं परित्यज्य गुरुं तत्रैव चिन्तयेत् ।
व्याख्यामुद्राकरं प्रीतं सुस्मितं शिष्यवत्सलम् ॥४॥

प्रसन्नवदनं शान्तं परितुष्टं निरन्तरम् ।
ध्यात्वा तदाज्ञामादाय हृत्पद्मे निर्मले सिते ॥५॥

सहस्रपद्मे विस्तीर्णे देवमिष्टं विचिन्तयेत् ।
यस्य देवस्य यद् ध्यानं यद् रूपं तद् विचिन्तयेत् ॥६॥

गृहीत्वा तदनुज्ञां च कर्तव्यं समयोचितम् ।
वेदोक्तं स्थलमासाद्य विन्मूत्रमुत्सृजेन्मुदा ॥७॥

---

२c : यत् श्रुत्वा FH
३a : मुहूर्त्त G
३b : ब्रह्मबन्ध्रस्थ° AeCF
४d : सुखितं D
६a : °पत्रे G
६d : तद् रूपं तद् C
७d : मूत्रमुत्सृजते ABF

जलं जलसमीपं च सरन्ध्रं प्राणिसन्निधिम् ।
देवालयसमीपं च वृक्षमूलं च वर्त्म च ॥८॥
फलोत्कर्षस्थलं चैव सस्यक्षेत्रं च गोष्ठकम् ।
नदीकन्दरगर्भं च पुष्पोद्यानं च पङ्किलम् ॥९॥
ग्रामादभ्यन्तरं चैव नृणां गृहसमीपकम् ।
शङ्कुं सेतुं शरवणं श्मशानं वह्निसन्निधिम् ॥१०॥
क्रीडास्थलं महारण्यं मञ्चकाधःस्थलं तथा ।
वृक्षच्छायायुतं स्थानमनन्तप्राणिपुण्यकम् ॥११॥
दूर्वास्थानं कुशस्थानं वल्मीकस्थानमेव च ।
वृक्षारोपणभूमिं च कार्यार्थं परिसंस्कृताम् ॥१२॥
एतत् सर्वं परित्यज्य पुरीषं परिवर्जयेत् ।
कृत्वा गर्तं पुरीषं च मूत्रं च परिवर्जयेत् ॥१३॥
पुरीषमूत्रोत्सर्गं च दिवा कुर्यादुदङ्मुखः ।
पश्चिमाभिमुखो रात्रौ सन्ध्यायां दक्षिणामुखः ॥१४॥
मौनी धृत्वा च निश्वासं यथा गन्धो न सञ्चरेत् ।
त्यक्त्वा मृदा समाच्छाद्य शौचं कुर्याद् विचक्षणः ॥१५॥
कृत्वा तु लोष्टशौचं च जलशौचं ततः परम् ।
मृद्युक्तं तज्जलं चैव तत्प्रमाणं निशामय ॥१६॥
एकां लिङ्गे मृदं दद्याद् वामहस्ते तु मृद्द्वयम् ।
उभयोर्हस्तयोर्द्वे तु मूत्रशौचं प्रकीर्तितम् ॥१७॥

---

८b : प्राण° A
११b : पञ्च° H
११d : °पाल्यकम् CD °पण्यकम् BH
१३cd : repeated in C
१६a : कृत्वा च G
१७a : दद्यात् A
१७b : °हस्तेन C °हस्ते च eG

मैथुनानन्तरं शौचं मूत्रशौचाच्चतुर्गुणम् ।
एकां लिङ्गे गुदे तिस्रस्तथा वामकरे दश ॥१८॥

उभयोः सप्त दातव्याः पादौ सव्येऽप्यसव्यतः ।
पुरीषशौचं विप्राणां गृहिणामेवमेव च ॥१९॥

विधवानां च द्विगुणं शौचमेवं प्रकीर्तितम् ।
यतीनां वैष्णवानां च राजर्षेर्ब्रह्मचारिणाम् ॥२०॥

चतुर्गुणं च गृहिणां तेषां शौचं प्रकीर्तितम् ।
न यावदपनीयेत द्विजः शूद्रस्तथाङ्गनाः ॥२१॥

गन्धलेपक्षयकरं तेषां शौचं प्रकीर्तितम् ।
शौचं क्षत्रविशोश्चैव द्विजानां गृहिणां समम् ॥२२॥

द्विगुणं वैष्णवादीनां मुनीनां परिकीर्तितम् ।
न्यूनाधिकं न कर्तव्यं शौचं शुद्धिमभीप्सता ॥२३॥

प्रायश्चित्तं प्रसज्जेत विहितातिक्रमे कृते ।
शौचं मृन्नियमं राजन् सावधानं निशामय ॥२४॥

मृच्छौचेन शुचिर्विप्रोऽप्यशुचिश्च व्यतिक्रमे ।
वल्मीकमूषिकोत्खातां मृदमन्तर्जलां तथा ॥२५॥

---

१६b : पादे C
१६d : इदं D समं G
२०b : एव FG
२०c-२२b : not found in G
२०c-२१b : not found in H
२१b : चैवम् (for शौचं) C
२४c : तु मृन्मयं D
२५a : मृत् शौचेन FH

शौचावशिष्टां गेहाच्च नादद्याल्लेपसम्भवाम् ।
अन्तःप्राण्यवपन्नां च हलोत्खातां विशेषतः ॥२६॥
कुशमूलोत्थितां चैव दूर्वामूलोत्थितां तथा ।
अश्वत्थमूलानीतां च तथा कञ्चुलिकोत्थिताम् ॥२७॥
चतुष्पथानां गोष्ठानां गोपथानां तथैव च ।
सस्यस्थानं च क्षेत्राणामुद्यानानां मृदं त्यजेत् ॥२८॥
स्नातो वाप्यथवास्नातो विप्रः शौचेन शुद्धयति ।
शौचहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ॥२९॥
कृत्वा शौचमिदं विप्रो मुखं प्रक्षालयेत् सुधीः ।
आदौ षोडशगण्डूषैर्मुखशुद्धिं विधाय च ॥३०॥
दन्तकाष्ठेन दन्तं च तत्पश्चात् परिमार्जयेत् ।
पुनः षोडशगण्डूषैर्मुखशुद्धिं समाचरेत् ॥३१॥
दन्तमार्जनकाष्ठानां नियमं शृणु भूमिप ।
निरूपितं सामवेदे हरिणा चाह्निकक्रमे ॥३२॥
अपामार्गं सिन्धुवारमाम्रं च करवीरकम् ।
खदिरं च शिरीषं च जातिपुन्नागशालकम् ॥३३॥
अशोकमर्जुनं चैव क्षीरिवृक्षं कदम्बकम् ।
जम्बूकं वकुलं चौड्रं पलाशं च प्रशस्तकम् ॥३४॥
वदरीं पारिभद्रं च मन्दारं शाल्मलिं तथा ।
वृक्षं कण्टकयुक्तं च लतादिपरिवर्जितम् ॥३५॥
पिप्पलं च पियालं च तिन्तिडीकं च तालकम् ।
खर्जूरं नारिकेलं च तालीं च परिवर्जयेत् ॥३६॥
दन्तशौचविहीनश्च सर्वशौचविहीनकः ।
शौचहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ॥३७॥

---

३१ab : तत्पश्चाद् दन्तकाष्टेन दन्तांश्च परिमार्जयेत् G
३३d : °सालकम् AeGH
: °पुन्यागसालकम् F
३४b : क्षीर° A

कृत्वा शौचं शुचिर्विप्रो धृत्वा धौते च वाससी ।
प्रक्षाल्य पादावाचम्य प्रातःसन्ध्यां समाचरेत् ॥३८॥
एवं त्रिसन्ध्यं सन्ध्यां च कुरुते कुलजो द्विजः ।
स स्नातः सर्वतीर्थेषु त्रिसन्ध्यं यः समाचरेत् ॥३९॥
त्रिसन्ध्यहीनोऽप्यशुचिरनर्हः सर्वकर्मसु ।
यदह्ना कुरुते कर्म न तस्य फलदं भवेत् ॥४०॥
नोपतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम् ।
स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥४१॥
पूर्वां सन्ध्यां परित्यज्य मध्यमां पश्चिमां तथा ।
ब्रह्महत्यामात्महत्यां प्रत्यहं लभते द्विजः ॥४२॥
एकादशीविहीनानां सन्ध्याहीनः समो द्विजः ।
कल्पं व्रजेत् कालसूत्रं यथा हि वृषलीपतिः ॥४३॥
विधाय प्रातःसन्ध्यां वै गुरुमिष्टं सुरं रविम् ।
ब्रह्माणमीशं विष्णुं च मायां पद्मां सरस्वतीम् ॥४४॥
प्रणम्य गव्यमाज्यं च दर्पणं मधुकाञ्चनम् ।
दृष्ट्वा स्नानादिकं काले कुर्यात् साधकसत्तमः ॥४५॥
पुष्करिण्यां तु वाप्यां वा यदा स्नानं समाचरेत् ।
समुद्धृत्य पञ्चपिण्डानादौ धर्मविचक्षणः ॥४६॥
नद्यां नदे कन्दरे वा तीर्थे वा स्नानमाचरेत् ।
कुर्यात् स्नात्वा तु संकल्पं ततः स्नानं पुनर्नृप ॥४७॥
विष्णुप्रीतिकाम एव वैष्णवानां महीपते ।
संकल्पो गृहिणां चैव कृतपातकनाशनम् ॥४८॥

---

४०d : तदस्य विफलं भवेत् G
४५c : स्नानमिदं H
४५d : °सत्तम B
४७d : स्नात्वा H

विप्रः कृत्वा तु संकल्पं मृदं गात्रे प्रलेपयेत् ।
वेदोक्तमन्त्रगानेन देहशुद्धिकृतेन च ॥४९॥
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ।
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ॥५०॥
आरुह्य मम गात्राणि सर्वं पापं प्रमोचय ।
पुण्यं देहि महाभागे स्नानानुज्ञां कुरुष्व माम् ॥५१॥
इत्युक्त्वा च जले नाभिप्रमाणे मन्त्रपूर्वकम् ।
चतुर्हस्तप्रमाणं च कृत्वा मण्डलिकां शुभाम् ॥५२॥
तीर्थान्यावाहयेत् तत्र हस्तं दत्त्वा महीपते ।
यानि यानि च तीर्थानि सर्वाणि कथयामि ते ॥५३॥
गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥५४॥
नलिनी नन्दिनी सीता मालिनी च महापथा ।
विष्णुपादार्घ्यसम्भूता गङ्गा त्रिपथगामिनी ॥५५॥
पद्मावती भोगवती स्वर्णरेखा च कौशिकी ।
दक्षा पृथ्वी च विहगा विश्वकाया शिवामृता ॥५६॥
विद्याधरी सुप्रसन्ना तथा लोकप्रसादनी ।
क्षेमा च वैष्णवी शान्ता शान्तिदा गोमती सती ॥५७॥
सावित्री तुलसी दुर्गा महालक्ष्मीः सरस्वती ।
कृष्णप्राणाधिका राधा लोपामुद्रादितिः सती ॥५८॥

---

४९b-५०c : not found in A
५१b : सर्वपापं AF
५१d : मे G
५३a : आहारयेत् C
५५b : सालिनी FH शालिनी e
५६a : पद्मवती D
५६c : यथा (for दक्षा) C
५७c : क्षमा (for क्षेमा) G

अहल्या चादितिः सन्ध्या संज्ञा स्वाहाप्यरुन्धती ।
शतरूपा देवदूतीत्येवमाद्याः स्मरेत् सुधीः ॥५९॥
एवं स्नात्वा महापूतः कुर्याच्च तिलकं बुधः ।
बाह्वोर्मूले ललाटे च कण्ठदेशे च वक्षसि ॥६०॥
स्नानं दानं तपो होमो दैवं च पितृकर्म च ।
तत्सर्वं निष्फलं याति ललाटे तिलकं विना ॥६१॥
ब्राह्मणस्तिलकं कृत्वा कुर्यात् सन्ध्यां च तर्पणम् ।
नमस्कृत्य सुरान् भक्त्या गृहे गच्छेन्मुदान्वितः ॥६२॥
प्रक्षाल्य पादौ यत्नेन धृत्वा धौते च वाससी ।
मन्दिरं प्रविशेत् प्राज्ञ इत्याह हरिरेव च ॥६३॥
विना पादौ च प्रक्षाल्य स्नात्वा विशति मन्दिरम् ।
तस्य स्नानादिकं नष्टं जपो होमश्च पार्थिव ॥६४॥
परिधाय स्निग्धवस्त्रं गृहं चेत् प्रविशेद् गृही ।
रुष्टा लक्ष्मीर्गृहाद् याति शापं दत्त्वा सुदारुणम् ॥६५॥
ऊर्ध्वजङ्घश्च यो विप्रः पादौ प्रक्षालयेन्नृप ।
तावद् भवति चाण्डालो यावद् गङ्गां न पश्यति ॥६६॥
उपविश्यासने राजन्नाचम्य साधकः शुचिः ।
पूजां कुर्यात् प्रयत्नेन भक्तियुक्तोऽतिसंयतः ॥६७॥
शालग्रामे मणौ यन्त्रे प्रतिमायां जले स्थले ।
गोपृष्ठे वा गुरौ विप्रे प्रशस्तमर्चनं हरेः ॥६८॥
सर्वस्मात् पूजनं शस्तं शालग्रामे हि पार्थिव ।
सुराणामेव सर्वेषां यत्राधिष्ठानमेव च ॥६९॥

---

६४b : विशन्ति D
६८a : शालग्राम° G
६८b : जलेऽचले CDH जले च वा G
६९a : शिष्टं G

स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
शालग्रामोदकेनैव योऽभिषेकं समाचरेत् ॥७०॥
शालग्रामजलं भक्त्या नित्यमश्नाति यो नरः ।
जीवन् मुक्तः स च भवेद् यात्यन्ते विष्णुमन्दिरम् ॥७१॥
शालग्रामशिलाचक्रं यत्र तिष्ठति पार्थिव ।
स चक्रो भगवांस्तत्र सर्वतीर्थानि निश्चितम् ॥७२॥
तत्र यो हि मृतो देही ज्ञानतोऽज्ञानतोऽपि वा ।
रत्ननिर्माणयानेन स याति श्रीहरेः पदम् ॥७३॥
शालग्रामं विनान्यत्र न साधुः पूजयेद्धरिम् ।
कृत्वा तत्र हरेः पूजां परिपूर्णफलं लभेत् ॥७४॥
पूजाधारश्च कथितः श्रूयतां पूजनक्रमम् ।
हरेः पूजा बहुमता कथयामि यथाक्रमम् ॥७५॥
कश्चिद् ददाति हरये उपचाराणि षोडश ।
सुन्दराणि पवित्राणि नित्यं भक्त्या च वैष्णवः ॥७६॥
कश्चिद् द्वादशद्रव्याणि पञ्चवस्तूनि कश्चन ।
येषामेव यथाशक्ति भक्तिर्मूलं च पूजने ॥७७॥
आसनं वसनं पाद्यमर्घ्यमाचमनीयकम् ।
पुष्पचन्दनधूपं च नैवेद्यं दीप एव च ॥७८॥
गन्धमाल्ये च शय्या च ललिता सुविलक्षणा ।
जलमन्नं च ताम्बूलं साधारं षोडशं स्मृतम् ॥७९॥
गन्धान्नतल्पताम्बूलं विना द्रव्याणि द्वादश ।
पाद्यार्घ्यजलनैवेद्यपुष्पाण्येतानि पञ्च च ॥८०॥
सर्वाण्येतानि मूलेन दद्यात् साधकसत्तमः ।
गुरूपदिष्टं मूलं च प्रशस्तं सर्वकर्मसु ॥८१॥

---

७१b : निर्मथ्य स्नाति C
७२d : चैव हि G
७७d : भक्तिमूलं A
८०d : पुष्पानि तानि H

आदौ कृत्वा भूतशुद्धिं प्राणायामं ततः परम् ।
अङ्गप्रत्यङ्गन्यासं च मन्त्रन्यासं ततः परम् ॥८२॥
वर्णन्यासं विनिर्वर्त्य चार्घ्यपात्रं विनिर्दिशेत् ।
त्रिकोणमण्डलं कृत्वा तत्र कूर्मं प्रपूजयेत् ॥८३॥
जलेनापूर्य शङ्खं च तत्र संस्थापयेन् नृप ।
जलं संपूज्य विधिवत् तीर्थान्यावाहयेत् ततः ॥८४॥
पूजोपकरणं तेन जलेन क्षालयेत् ततः ।
ततो गृहीत्वा पुष्पं च कृत्वा योगासनं शुचिः ॥८५॥
ध्यानेन गुरुदत्तेन ध्यायेत् कृष्णमनन्यधीः ।
ध्यात्वा पाद्यादिकं सर्वं दद्यान्मूलेन साधकः ॥८६॥
अङ्गप्रत्यङ्गदेवं च वेदोक्तं पूजयेद् ध्रुवम् ।
मूलं जप्त्वा यथाशक्ति देवे मन्त्रे समर्पयेत् ॥८७॥
दत्त्वोपहारं विविधं स्तुत्वा च कवचं पठेत् ।
ततः कृत्वा परीहारं मूर्ध्ना च प्रणमेद् भुवि ॥८८॥
कृत्वा च देवपूजां च यज्ञं कुर्याद् विचक्षणः ।
श्रौतस्मार्ताग्नियुक्तं च बलिं दद्यात् ततो नृप ॥८९॥
नित्यं श्राद्धं यथाशक्ति दानं वित्तानुरूपकम् ।
कृत्वा कृती च विहरेत् क्रम एष श्रुतौ स्मृतः ॥९०॥
इत्येवं कथितं सर्वं वेदोक्तं श्रुतमुत्तमम् ।
आह्निकस्य च राजेन्द्र किं भूयः श्रोतुमिच्छसि ॥९१॥

इति श्रीपद्मपुराणे स्वर्गखण्डे सदाचाराह्निकं नाम ऊनत्रिंशत्तमोऽध्यायः ॥२९॥

---

८४c : संपूर्य A
८८a : विधिवत् G
८९c : °युक्तं च not found in H
९०b : दानवृत्तानुरूपकं CeFH
९०d : श्रुतः (for स्मृतः) FH
९१c : तु A
९१d : इच्छति CeG
पुष्पिका : इत्यादिमहापुराणे पाद्मे A
: अष्टाविंशति° A

# ३०

मान्धातोवाच

या गतिः प्राप्यते येन कर्मणा मुनिसत्तम ।
प्रेत्यभावे तथेहापि देवर्षे तद् ब्रवीहि मे ॥१॥

नारद उवाच

तपसा प्राप्यते स्वर्गस्तपसा प्राप्यते यशः ।
आयुः प्रकर्षो भोगश्च लभ्यते तपसा नृप ॥२॥
ज्ञानविज्ञानमारोग्यं ब्रह्मसम्पत्तथैव च ।
सौभाग्यं चैव तपसा प्राप्यते नरसत्तम ॥३॥
धनं प्राप्नोति तपसा मानेनाज्ञां प्रयच्छति ।
उपभोगांश्च दानेन ब्रह्मचर्येण जीवितम् ॥४॥
अहिंसायाः फलं रूपं दीक्षाया जन्म वै कुले ।
फलमूलाशिनां राज्यं स्वर्गः पर्णाशिनां भवेत् ॥५॥
पयोभक्षो दिवं याति दानेन द्रविणाधिकः ।
गुरुशुश्रूषया विद्यां नित्यश्राद्धेन सन्ततिम् ॥६॥
गवाढ्यः शाकदीक्षाभिः स्वर्गमाहुस्तृणाशिनाम् ।
स्त्रियस्त्रिसवनं स्नात्वा वायुं पीत्वा क्रतुं लभेत् ॥७॥
उदवासो भवेद् यस्तु स नराधिपतिर्भवेत् ।
नित्यस्नायी भवेद् दक्षः सन्ध्ये तु द्वे जपन् द्विजः ॥८॥
मरुं साधयतो राज्यं नाकपृष्ठे न नाशके ।
स्थण्डिले शयमानानां गृहाणि शयनानि च ॥९॥

---

२a : तप्यते C
६-७ : not found in G
९b : अनाशके BC
: नाकपिष्टमनाशके F नाकपृष्टमनाशके H नाकपृष्ठमनाशकं AG

चीरवल्कलवासोभिर्वासांस्याभरणानि च ।
शय्यासनानि दानानि योगयुक्ते तपोधने ॥१०॥
अग्निप्रवेशे नियतं ब्रह्मलोके महीयते ।
रसानां प्रतिसंहारात् सौभाग्यमिह विन्दति ॥११॥
आमिषत्यागतो राजन् प्रजास्यायुष्मती भवेत् ।
सत्यं वदन् नरश्रेष्ठ स्वर्गलोके महीयते ॥१२॥
दानेन कीर्तिलाभः स्यादहिंसारोग्यदायिनी ।
द्विजशुश्रूषया राज्यं द्विजत्वं चापि जायते ॥१३॥
पानीयस्य प्रदानेन कीर्तिर्भवति शाश्वती ।
अन्नपानप्रदानेन तृप्यते कामभोगतः ॥१४॥
सान्त्वदः सर्वलोकानां सर्वशोकैर्विमुच्यते ।
देवशुश्रूषया राज्यं दिव्यरूपं नियच्छति ॥१५॥
दीपालोकप्रदानेन चक्षुष्मान् भवते नरः ।
गन्धमाल्यनिवृत्त्या तु कीर्तिर्भवति पुष्कला ॥१६॥
प्रेक्षणीयप्रदानेन स्मृतिं मेधां च विन्दति ।
केशश्मश्रून् धारयतामग्र्या भवति सन्ततिः ॥१७॥
उपवासं च दीक्षां च अभिषेकं च पार्थिव ।
कृत्वा द्वादशवर्षाणि वीरस्थानाद् विशिष्यते ॥१८॥
दासीदासमलङ्कारान् क्षेत्राणि च गृहाणि च ।
ब्रह्मदेयां सुतां दत्त्वा प्राप्नोति मनुजर्षभ ॥१९॥

---

११a : अग्नि प्रवेशी D
११d : विन्दते D
१२b : प्रजाप्या° G
१३d : दिव्यरूपं नियच्छति AF
१४c-१६b : not found in AF
१५b : प्रमुच्यते G
१६c : निवृत्तात् तु AC
१७d : अग्न्या D अग्रा F

क्रतुभिश्चोपवासैश्च त्रिदिवं याति वै नरः ।
लभते च शिवं स्थानं पत्रपुष्पप्रदो नरः ॥२०॥

सुवर्णशृङ्गैः परिशोभितानां
गवां सहस्रस्य नरः प्रदानात् ।
वसेत नाके त्रिदशैः सहैव-
माहुः पुरा वेदविदो मुनीन्द्राः ॥२१॥

ददाति चेद् वा कपिलां सवत्सां
कांस्योपदोहां च सुवर्णशृङ्गीम् ।
परत्र सा कामदुघास्य भूत्वा
दातारमभ्येति दिवि प्रदोग्ध्री ॥२२॥

यावन्ति रोमाणि भवन्ति धेन्वा-
स्तावत् समाः प्राप्य फलं प्रदाता ।
पुत्रांश्च पौत्रांश्च कुलं च सर्व-
मासप्तमं तारयते परत्र ॥२३॥

सदक्षिणां काञ्चनचारुशृङ्गीं
कांस्योपदोहां द्रविणोत्तरीयाम् ।
धेनुं तिलानां ददतो द्विजाय
लोका वसूनां सुलभा भवन्ति ॥२४॥

स्वकर्मभिर्बद्धमवाक्पतन्तं
नरं महापापमपि क्षितीन्द्र ।

---

२०c : चिरं (for शिवं) H
२१c : सहैव H
२२c : °दुघान्य C
२३a : धेनोस् AF धेनो: B
२३b : समां FGH
२४a : °दारुशृङ्गीं C
२५b : नयं H

महार्णवे नौरिव गाढदण्डा
दानं गवां तारयते परत्र ॥२५॥
ददाति कन्यां समलङ्कृतां यो
ददाति भूमिं च नृप द्विजाय ।
अन्नं च पानं ददतेऽतिथिभ्यो
स लोकमाप्नोति पुरन्दरस्य ॥२६॥
गृहं च यः सर्वगुणैरुपेतं
द्विजाय राजन् मनुजो ददेद् यः ।
श्रद्धान्वितो वेदविदे च भक्त्या
तस्यापि लोकाः कुरुषूत्तरेषु ॥२७॥
धुर्यप्रदानेन गवां तथैव
लोकानवाप्नोति नरो वसूनाम् ।
स्वर्गाय चाहुस्तु हिरण्यदानं
ततो विशिष्टं कनकप्रदानम् ॥२८॥
छत्रप्रदानेन गृहं वरिष्ठं
यानं तथोपानहसम्प्रदाने ।
वस्त्रप्रदानेन वपुः सुरूपं
गन्धप्रदानात् सुरभिर्नरः स्यात् ॥२९॥
पुष्पोपगं वाथ फलोपगं वा
यः पादपं स्पर्शयते द्विजाय ।

---

२६b : मृगद्विजाय D
२६c : दानं (for पानं) C
२७c : °न्विते AF
: वेदविदेव F
२८a : तथा वै BGH
२८d : गरिष्ठं C
२८a-२९c : not found in AF

स स्त्रीसमृद्धं बहुरत्नपूर्णं
लभत्ययत्नोपनतं गृहं वै ॥३०॥
भक्ष्यान्नपानीयरसप्रदाता
सर्वान् समाप्नोति रसान् प्रकामम् ।
प्रतीच्छयाच्छादनसम्प्रदाता
प्राप्नोति तान्येव न संशयोऽत्र ॥३१॥
स्रग्धूपगन्धान्यनुलेपनानि
स्नानानि माल्यानि च मानवो यः ।
दद्याद् द्विजेभ्यः सभवेदरोग-
स्तथाभिरूपश्च नरेन्द्र लोके ॥३२॥
वीजैरशून्यं शयनैरुपेतं
दद्याद् गृहं यः पुरुषो द्विजाय ।
पुण्याभिरामं बहुरत्नपूर्णं
लभत्यधिष्ठानवरं स राजन् ॥३३॥
सुगन्धिचित्रास्तरणोपधानं
दद्यान् नरो यः शयनं द्विजाय ।
रूपान्वितां पक्ष्मवतीं मनोज्ञां
भार्यामयत्नोपगतां लभेत् सः ॥३४॥
पितामहस्यानुचरो वीरशायी भवेन्नरः ।
नाधिकं विद्यते तस्मादित्याहुः परमर्षयः ॥३५॥

इति श्रीपद्मपुराणे स्वर्गखण्डे परलोकसाधनं नाम त्रिंशत्तमोऽध्यायः ॥३०॥

३१a : भक्षान्न°
३२c : प्रभवेद् H
पुष्पिका : इत्यादिमहापुराणे पाद्मे AF
ऊनत्रिंशत्तमो° A

# ३१

मान्धातोवाच

देवर्षे श्रोतुमिच्छामि भक्ष्याभक्ष्यविनिर्णयम् ।
आहारेण विना यस्मान्न प्राणन्ति नराः क्वचित् ।
तस्मादाहारसंस्कारं देवर्षे ब्रूहि साम्प्रतम् ॥१॥

नारद उवाच

कश्चित् तपस्वी विप्रश्च निराहारश्चिरं मुनिः ।
कश्चित् समीरणाहारी फलाहारी च कश्चन ॥२॥
अन्नाहारी यथा काले गृही तु गृहिणीयुतः ।
येषामिच्छा यथा राजन् रुचीनां विविधा गतिः ॥३॥
हविष्यान्नं ब्राह्मणानां प्रशस्तं गृहिणां सदा ।
नारायणोच्छिष्टमिष्टमनिवेद्यमभक्ष्यकम् ॥४॥
अन्नं विष्ठा जलं मूत्रं यद् विष्णोरनिवेदितम् ।
विड्युक्तं सर्वपापाक्तमन्नं च हरिवासरे ॥५॥
ब्राह्मणः कामतोऽन्नं च यो भुङ्क्ते हरिवासरे ।
त्रैलोक्यजनितं पापं सोऽपि भुङ्क्ते न संशयः ॥६॥
न भोक्तव्यं न भोक्तव्यं न भोक्तव्यं च भूपते ।
गृहिभिर्ब्राह्मणैरन्नं सम्प्राप्ते हरिवासरे ॥७॥
गृही शैवश्च शाक्तश्च ब्राह्मणोऽज्ञानदुर्बलः ।
प्रयाति कालसूत्रं च भुक्त्वा च हरिवासरे ॥८॥

---

३c : शेषां C तेषां G
: च या (for यथा) GH
४d : °मभक्षकम् A
५a : पयो (for जलं) G
६a : कामतो ब्राह्मणान्नं च C
७c : वस्रं (for °रन्नं) A

कृमिभिः शालमानैश्च भक्षितस्तत्र तिष्ठति ।
विण्मूत्रभक्षणं कृत्वा यावदिन्द्राश्चतुर्दश ॥९॥
उपवासासमर्थश्चेत् फलमूलजलं पिबेत् ।
नष्टे शरीरे स भवेदन्यथा चात्मघातकः ॥१०॥
सकृद् भुङ्क्ते हविष्यान्नं विष्णोर्नैवेद्यमेव च ।
न भवेत् प्रत्यवायी स उपवासफलं लभेत् ॥११॥
एकादश्यामनाहारी गृही विप्रश्च पार्थिव ।
स च तिष्ठति वैकुण्ठे यावद् वै ब्रह्मणो वयः ॥१२॥
गृहिणां शैवशाक्तानामिदमुक्तं च भूपते ।
विशेषतो वैष्णवानां यतीनां ब्रह्मचारिणाम् ॥१३॥
नित्यं नैवेद्यभोजी यः श्रीकृष्णस्य वैष्णवः ।
नित्यं शतोपवासानां जीवन्मुक्तः फलं लभेत् ॥१४॥
वाञ्छन्ति तस्य संस्पर्शं तीर्थानि सर्वदेवताः ।
आलापं दर्शनं चैव सर्वपापप्रणाशनम् ॥१५॥
द्विःस्विन्नमन्नं पृथुकं शुद्धं देशविशेषके ।
नात्यन्तशस्तं विप्राणां भक्षणे च निवेदने ॥१६॥
अभक्ष्यं च यतीनां च विधवाब्रह्मचारिणाम् ।
ताम्बूलं विधवास्त्रीणां यतीनां ब्रह्मचारिणाम् ।
तपस्विनां च राजेन्द्र गोमांससदृशं ध्रुवम् ॥१७॥
सर्वेषां ब्राह्मणानां च अभक्ष्यं शृणु पार्थिव ।
यदुक्तं सामवेदे च हरिणा चाह्निकक्रमे ॥१८॥

१०c : भवेत् C
A reads १७cd before १४
१३b : उक्तमेतन् महीपते G
१७a : अभक्षं AC
१७cd : not found in C
१७d : तथा च (for यतीनां) H
१८b : अभक्षं AC

ताम्रपात्रे पयःपानमुच्छिष्टे घृतभोजनम् ।
दुग्धं लवणसंयुक्तं सद्यो गोमांसभक्षणम् ॥१९॥
नारिकेलोदकं कांस्ये ताम्रपात्रे स्थितं मधु ॥२०॥
उत्थाप्य वामहस्तेन यस्तोयं पिबते द्विजः ।
सुरापीतिः स विज्ञेयः सर्वधर्मबहिष्कृतः ॥२१॥
अनिवेद्यं हरेरन्नं भक्ष्यशेषं च नित्यशः ।
पीतशेषं जलं चैव गोमांससदृशं नृप ॥२२॥
वार्ताकुलफलं चैव गोमांसं कार्त्तिके स्मृतम् ।
माघे तु मूलकं चैव कलम्बी शयने तथा ॥२३॥
श्वेतवर्णं च तालं च मसूरं मत्स्यमेव च ।
सर्वेषां ब्राह्मणानां च त्याज्यं च सर्वदेशतः ॥२४॥
मत्स्यांस्त्वकामतो भुक्त्वा सोपवासस्त्र्यहं चरेत् ।
प्रायश्चित्तिं ततः कृत्वा शुद्धिमाप्नोति ब्राह्मणः ॥२५॥
प्रतिपत्सु च कूष्माण्डमभक्ष्यमर्थनाशकम् ।
द्वितीयायां च बृहती भोजको न स्मरेद्धरिम् ॥२६॥
अभक्ष्यं वै पटोलं च शत्रुवृद्धिकरं परम् ।
तृतीयायां चतुर्थ्यां च मूलकं धननाशनम् ॥२७॥
कलङ्ककारणं चैव पञ्चम्यां बिल्वभक्षणम् ।
तिर्यग्योनिं प्रापयेत्तु षष्ठ्यां तु निम्बभक्षणम् ॥२८॥
रोगवृद्धिकरं चैव सप्तम्यां तालभक्षणम् ।
नारिकेलफलं भक्ष्यमष्टम्यां बुद्धिनाशनम् ॥२९॥

---

२५c : प्रायश्चित्तं G
२७a : अभक्ष्यं च CeFGH
२७c : तु AG
२८a : °कारकम् G
२८d : च A
२९ab : ताले शरीरं नश्यति सप्तमीं वर्जयेत्ततः C

तुम्बी नवम्यां गोमांसं दशम्यां च कलम्बिका ।
एकादश्यां तथा शिम्बी द्वादश्यां पूतिका तथा ॥३०॥
त्रयोदश्यां तु वार्ताकुभक्षणं पुत्रनाशनम् ।
चतुर्दश्यां माषभक्ष्यं महापापकरं परम् ॥३१॥
पञ्चदश्यां तथा मांसमभक्ष्यं गृहिणां नृप ।
गृहिणां प्रोक्षितं मांसं भक्ष्यमन्यदिने नृप ॥३२॥
प्रातःस्नाने तथा श्राद्धे पारणे व्रतवासरे ।
प्रशस्तं सार्षपं तैलं पक्वतैलं च पार्थिव ॥३३॥
कुहूपूर्णेन्दुसंक्रान्तिचतुर्दश्यष्टमीषु च ।
रवौ श्राद्धे व्रताहे च दुष्टं स्त्रीतिलतैलकम् ॥३४॥
माषं च रक्तशाकं च कांस्यपात्रे च भोजनम् ।
निषिद्धं शयने चैव कूर्ममांसं च प्रोक्षितम् ॥३५॥
निषिद्धं सर्ववर्णानां दिवा स्त्रीणां निषेवनम् ।
रात्रौ च दधिभक्ष्यं च शयनं सन्ध्ययोर्द्वयोः ॥३६॥
रजस्वलास्त्रीशयनमेतन्नरककारणम् ।
रजस्वलावीरान्नं च पुंश्चल्यन्नमभक्ष्यकम् ।
मूले मृगे भाद्रपदे मांसं गोमांसतुल्यकम् ॥३७॥
मघायां कृत्तिकायां चैवोत्तरासु च पार्थिव ।
करोति मैथुनं यो हि कुम्भीपाकं च स व्रजेत् ॥३८॥
रोहिण्यां च विशाखायां मैत्रे चैवोत्तरासु च ।
मघायां कृत्तिकायां च द्विजैः क्षौरं विवर्जितम् ॥३९॥
कृत्वा तु मैथुनं क्षौरं यो देवांस्तर्पयेत् पितॄन् ।
रुधिरं तद् भवेत् तोयं दाता च नरकं व्रजेत् ॥४०॥

---

३५a : मांसं AB
३७f : माषं B
३८ab : वै उत्तरासु G
३९b : चैत्रोत्तरासु च C

यत् कर्तव्यमकर्तव्यं तदिदं कथितं नृप ।
भक्ष्यादौ च ततोऽन्यत्र दोषादोषौ पुनः शृणु ॥४१॥
दुराचारो हि पुरुषो नेहायुर्विन्दते महत् ।
त्रसन्ति यस्माद् भूतानि तथा परिभवन्ति च ॥४२॥
तस्मात् कुर्यादिहाचारं यदीच्छेच्छ्रेयमात्मनः ।
अपि पापशरीरस्य आचारो हन्त्यलक्षणम् ॥४३॥
आचारलक्षणो धर्मः सन्तश्चारित्रलक्षणाः ।
साधूनां च यथावृत्तमेतदाचारलक्षणम् ॥४४॥
ये नास्तिका निष्क्रियाश्च गुरुशास्त्राभिलङ्घिनः ।
अधर्मज्ञा दुराचारास्ते भवन्ति गतायुषः ॥४५॥
विशीला भिन्नमर्यादा नित्यं सङ्कीर्णमैथुनाः ।
अल्पायुषो भवन्तीह नरा निरयगामिनः ॥४६॥
सर्वलक्षणहीनोऽपि सम्यगाचारवान् नरः ।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥४७॥
अक्रोधनः सत्यवादी भूतानामविहिंसकः ।
अनसूयुरजिह्मश्च शतं वर्षाणि जीवति ॥४८॥
लोष्टमर्दी तृणच्छेदी नखखादी च यो नरः ।
नित्योच्छिष्टः शङ्कुशुको नेहायुर्विन्दते महत् ॥४९॥

---

४३b : यदीच्छेत् श्रेयम् AF
४४ : not found in C
४४a : आचारे D
४९a : लोष्ट्रमर्दी B
: तृणच्छेदी D
४९c : सङ्कुसुको A
४९d : विद्यते A

ब्राह्मे मुहूर्ते बुद्ध्येत धर्मार्थौ चानुचिन्तयेत् ।
परदारा न गन्तव्याः सर्ववर्णेषु कस्यचित् ।
नहीदृशमनायुष्यं लोके किञ्चन विद्यते ॥५०॥

यादृशं पुरुषस्येह परदारोपसेवनम् ।
प्रसाधनं च केशानामञ्जनं दन्तधावनम् ॥५१॥

पूर्वाह्ण एव कार्याणि देवतानां च पूजनम् ।
पुरीषमूत्रे नोदीक्षेन्नाधितिष्ठेत् कदाचन ॥५२॥

नातिकल्यं नातिसायं न च मध्यन्दिने स्थिते ।
नाज्ञातैः सह गच्छेत नैको न वृषलैः सह ॥५३॥

पन्था देयो ब्राह्मणाय गोभ्यो राजभ्य एव च ।
वृद्धाय भारतप्ताय गर्भिण्यै दुर्बलाय च ॥५४॥

प्रदक्षिणं प्रकुर्वीत परिज्ञातान् वनस्पतीन् ।
चतुष्पथान् प्रकुर्वीत सर्वानेव प्रदक्षिणान् ॥५५॥

मध्यन्दिने निशाकाले अर्धरात्रे च सर्वदा ।
चतुष्पथं न सेवेत उभे सन्ध्ये तथैव च ॥५६॥

उपानहौ च वस्त्रं च धृतमन्यैर्न धारयेत् ।
ब्रह्मचारी च नित्यं स्यात् पादं पादेन नाक्रमेत् ॥५७॥

अमावास्यां पौर्णमास्यां चतुर्दश्यां च सर्वशः ।
अष्टम्यां सर्वपक्षाणां ब्रह्मचारी सदा भवेत् ॥५८॥

वृथामांसं पृष्टमांसं न खादेच्च तथैव च ।
आक्रोशं परिवादं च पैशुन्यं च विवर्जयेत् ॥५९॥

---

५१cd : not found in C
५३b : सति (for स्थिते) G
५५a : च कुर्वीत CeFGH
५९a : पृष्टमांसं not found in H

नारुन्तुदः स्यान्न नृशंसवादी
न हीनतः परमभ्याददीत ।
ययास्य वाचा पर उद्विजेत
न तां वदेदुषतीं पापलोक्याम् ॥६०॥

वाक्सायका ये वदनात्पतन्ति
यैराहतः शोचति रात्र्यहानि ।
परस्य च मर्मसु ते पतन्ति
तां पण्डितो नावसृजेत् परेषु ॥६१॥

रोहते सायकैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥६२॥
कर्णिनालीकनाराचान् निर्हरन्ति शरीरतः ।
वाक्शल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः ॥६३॥
हीनज्ञानतिरिक्ताज्ञान् विद्याहीनान् विगर्हितान् ।
रुद्द्रविणहीनांश्च सत्त्वहीनांश्च नाक्षिपेत् ॥६४॥
नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम् ।
द्वेषस्तम्भाभिमानं च तैक्ष्ण्यं च परिवर्जयेत् ॥६५॥
परस्य दण्डं नोद्यच्छेत् क्रुद्धो नैनं निपातयेत् ।
अन्यत्र पुत्राच्छिष्याच्च शिष्टयर्थं ताडनं स्मृतम् ॥६६॥
न ब्राह्मणान् परिवदेन् नक्षत्राणि न निर्दिशेत् ।
तिथिं पक्षस्य न ब्रूयात् तथास्यायुर्न रिच्यते ॥६७॥

---

६१c : नाममर्मसु ACeGH
६३c : °शल्यं तु C
६४d : सत्त्वहीनांश्च not found in C
६५d : भैक्ष्यं च ABCFGH
६७d : विद्यते G

कृत्वा मूत्रपुरीषे तु रथ्यामाक्रम्य वा पुनः ।
पादप्रक्षालनं कुर्यात् स्वाध्याये भोजने तथा ॥६८॥
त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥६९॥
संयावं कृषरं मांसं शष्कुलीं पायसं तथा ।
आत्मार्थं न प्रकर्तव्यं देवार्थं तु प्रकल्पयेत् ॥७०॥
नित्यमग्निं परिचरेद् भिक्षां दद्याच्च नित्यदा ।
वाग्यतो दन्तकाष्ठं च नित्यमेव समाचरेत् ॥७१॥
न चाभ्युदितशायी स्यात् प्रायश्चित्ती तथा भवेत् ।
मातापितरमुत्थाय सर्वमेवाभिवादयेत् ।
आचार्यमथवाप्येवं तथायुर्विन्दते पुमान् ॥७२॥
न चाज्ञातां स्त्रियं गच्छेद् गर्भिणीं वा कदाचन ।
उदक्शिरा न स्वपेत तथा प्रत्यक्शिरा न च ।
प्राक्शिरास्तु स्वपेद् विद्वानथवा दक्षिणाशिराः ॥७३॥
न भग्ने नावदीर्णे च शयने प्रस्वपीत च ।
नान्तर्धानेन संयुक्ते न च तिर्यक् कदाचन ॥७४॥
न चापि गच्छेत् कार्येण समयाद् वापि नास्तिके ।
आसनं तु पदाकृष्य न प्रसज्जेत् तथा नरः ॥७५॥
न नग्नः कर्हिचित् स्नायान्न निशायां कदाचन ।
स्नात्वा च नावमृज्येत गात्राणि सुविचक्षणः ॥७६॥
न चानुलिम्पेदस्नात्वा स्नात्वा वासो न निर्धुनेत् ।
न चैवार्द्राणि वासांसि नित्यं सेवेत मानवः ॥७७॥

---

७०c : आत्मानं G
७३ab : e repeats ७५ab after ७३ab
७४b : प्रस्वपेत् बुधः G
७४d : वा (for च) D
७५d : not found in C

स्रजश्च नावकृष्येत न बहिर्धारयीत च ।
उदक्यया च संभाषां न कुर्वीत कदाचन ।।७८।।
अन्नं बुभुक्षमाणस्तु त्रिर्मुखेन स्पृशेदपः ।
भुक्त्वा चान्नं तथैव त्रिर्द्भिः पुनः परिमार्जयेत् ।।७९।।
प्राङ्मुखो नित्यमश्नीयाद् वाग्यतोऽन्नं न कुत्सयन् ।
प्रस्कन्दयेच्च मनसा भुक्त्वा चाग्निमुपस्पृशेत् ।।८०।।
आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
धन्यं पश्चान्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः ।।८१।।
अग्निमालभ्य तोयेन सर्वान् प्राणानुपस्पृशेत् ।
गात्राणि चैव सर्वाणि नाभिपाणितले तथा ।।८२।।
नाधितुष्येत् तुषाञ्जातु केशभस्मकपालिकाः ।
अन्यस्य चाप्यवस्नातं दूरतः परिवर्जयेत् ।।८३।।
शान्तिहोमांश्च कुर्वीत सावित्राणि च धारयेत् ।
निषण्णश्चापि खादेत न तु गच्छन् कदाचन ।।८४।।
मूत्रं नोत्तिष्ठता कार्यं न भस्मनि न गोव्रजे ।
आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संस्वपेत् ।
आर्द्रपादस्तु भुञ्जानो वर्षाणां जीवते शतम् ।।८५।।
त्रीणि तेजांसि नोच्छिष्ट आलभेत कदाचन ।
अग्निं गां ब्राह्मणं चैव यथा ह्यायुर्न रिष्यते ।।८६।।
त्रीणि तेजांसि नोच्छिष्ट उदीक्षेत कदाचन ।
सूर्याचन्द्रमसौ चैव नक्षत्राणि च सर्वशः ।।८७।।

---

७८c : संबाधां G
८१a-८२b : not found in AF
८३a : तुषान् जातु FH
८४a : °होमं च D
८५de : not found in G

अभिवादयेद् वृद्धांश्च दद्याच्चैवासनं स्वयम् ।
कृताञ्जलिरुपासीत गच्छन्तं पृष्ठतोऽन्वियात् ॥८८॥
न चासीतासने भिन्ने भिन्नकांस्यांश्च वर्जयेत् ।
नैकवस्त्रे च भोक्तव्यं न नग्नः स्नातुमर्हति ॥८९॥
स्वप्तव्यं नैव नग्नेन न चोच्छिष्टोऽपि संविशेत् ।
उच्छिष्टो न स्पृशेच्छीर्षं सर्वे प्राणास्तदाश्रयाः ॥९०॥
केशग्रहं प्रहारांश्च शिरस्येतान् विवर्जयेत् ।
न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिरः ॥९१॥
न चाभीक्ष्णं शिरः स्नायात् तथास्यायुर्न रिष्यते ।
शिरःस्नातश्च तैलेन नाङ्गं किञ्चिदपि स्पृशेत् ॥९२॥
तिलं भृष्टं न चाश्नीयात् तथास्यायुर्न रिष्यते ।
नाध्यापयेत् तथोच्छिष्टो नाधीयीत कदाचन ॥९३॥
वाते च पूतिगन्धे च मनसापि न चिन्तयेत् ।
अत्र गाथा यमोद्गीताः कीर्तयन्ति पुराविदः ॥९४॥
आयुरस्य निकृन्तामि प्रजामस्याददे तथा ।
य उच्छिष्टः प्रवदति स्वाध्यायं चापि गच्छति ॥९५॥
यश्चानध्यायकालेऽपि वेदानभ्यस्यति द्विजः ।
तस्य वेदः प्रणश्येत आयुश्च परिहीयते ।
तस्माद् युक्तोऽप्यनध्याये नाधीयीत कदाचन ॥९६॥
प्रत्यादित्यं प्रत्यनलं प्रतिगां च प्रतिद्विजान् ।
ये मेहन्ति च पन्थानं ते भवन्ति गतायुषः ॥९७॥

---

८८d : °न्वयात् F
८९b-९१b : not found in G
९०c : स्पृशेत् शीर्षं F
९३b : रिष्यति F
९६b : अभ्यस्यते ABF
९७a : प्रतिदिनं H

त्रीन् कृशान् नावजानीयाद् दीर्घमायुर्जिजीविषुः ।
ब्राह्मणं क्षत्रियं सर्पं सर्वे ह्याशीविषास्त्रयः ॥९८॥
दहत्याशीविषः क्रुद्धो यावत् पश्यति चक्षुषा ।
क्षत्रियोऽपि दहेत् क्रुद्धो यावत् पश्यति तेजसा ॥९९॥
ब्राह्मणस्तु कुलं हन्याद् ध्यानेनावेक्षितेन च ।
तस्मादेतत् त्रयं यत्नादुपसेवेत पण्डितः ॥१००॥
गुरुणा चैव निर्बन्धो न कर्तव्यः कदाचन ।
अनुमान्यः प्रसाध्यश्च गुरुः क्रुद्धो विशां पते ॥१०१॥
सम्यङ् मिथ्याप्रवृत्तेऽपि वर्त्तितव्यं गुराविह ।
गुरुनिन्दा दहत्यायुर्मनुष्याणां न संशयः ॥१०२॥
पिता माता पितृव्यश्च श्वसुरो मातुलस्तथा ।
आचार्यश्च पतिश्चेति सप्तैते गुरवः स्मृताः ॥१०३॥
मातुः स्वसा मातुलानी पितृव्यस्त्री पितुः स्वसा ।
श्वश्रूपूर्वजपत्नी च मातृतुल्याः प्रकीर्तिताः ॥१०४॥
शङ्करोऽपि च दक्षस्य श्वशुरस्याभिवादनम् ।
अकृत्वा लब्धवान् शापं यज्ञभागाद् बहिष्कृतः ॥१०५॥
दूरादावसथान्मूत्रं दूरात्पादावधारणम् ।
उच्छिष्टोत्सर्जनं चैव दूरे कार्यं हितैषिणा ॥१०६॥
रक्तमाल्यं न धार्यं स्याच्छुद्धं धार्यं तु पण्डितैः ।
वर्जयित्वा तु कमलं तथा कुवलयं नृप ॥१०७॥
रक्तं शिरसि धार्यं तु तथा वानेयमित्यपि ।
काञ्चनीयापि माला या न सा दुष्यति कर्हिचित् ॥१०८॥
स्नातस्य वर्णकं नित्यमार्द्रं दद्याद् विशां पते ।
विपर्ययं न कुर्वीत वाससोर्बुद्धिमान् नरः ॥१०९॥

---

९८a : °जानीया B
१०१d : महीपते CDG
१०६b : °धावनम् H
१०७ab : स्यात् शुद्धम् F

तथा नान्यधृतं धार्यं तथापदशमेव च ।
अन्यदेव भवेद् वासः शयनीये नरोत्तम ।
अन्यद्रथ्यासु देवानामर्चायामन्यदेव हि ॥११०॥
प्रियङ्गुचन्दनाभ्यां च विल्वेन तगरेण च ।
पृथगेवानुलिम्पेत केशरेण च बुद्धिमान् ॥१११॥
उपवासं च कुर्वीत स्नातः शुचिरलङ्कृतः ।
पर्वकालेषु सर्वेषु ब्रह्मचारी सदा भवेत् ॥११२॥
नालीढं नापरिहितं भक्षयीत कदाचन ।
तथा नोद्धृतसाराणि प्रेक्षते नाप्रदाय च ॥११३॥
न सन्निकृष्टैर्मेधावी अशुचिषु न सत्सु च ।
प्रतिषिद्धान्यधर्मेषु भक्तान् भुञ्जीत पृष्ठतः ॥११४॥
पिप्पलं च वटं चैव शनशाकं तथैव च ।
उडुम्बरं न खादेच्च भवार्थी पुरुषो नृप ॥११५॥
आज्यं गव्यं तथा मांसं मायूरं चैव वर्जयेत् ।
वर्जयेच्छुष्कमांसं च तथा पर्युषितं च यत् ॥११६॥
न पाणौ लवणं विद्वान् प्राश्नीयान् न च रात्रिषु ।
दधिशक्तूंश्च भुञ्जीत वृथा मांसं च वर्जयेत् ॥११७॥
सायं प्रातश्च भुञ्जीत नान्तराले समाहितः ।
वालेन तु न भुञ्जीत परश्राद्धं तथैव च ॥११८॥

---

१११c : एवाशु° C
११२c : सर्वकालेषु CDF
११३a : नानीतं D
११३d : °न्यप्रदाय C न प्रदाय AEG
११४a : सन्निकृष्टे H
११४b : अशुचिः D अशुचे F अशुचेः GH
११६a : आर्जं eF
११६c : वर्जयेत् शुष्कं FGH
११७d-११८a : not found in A
११८c : वातेन A

वाग्यतो नैकवस्त्रश्च नासंविष्टः कदाचन ।
भूमौ सदैव नाश्नीयान् नानासीनो न शब्दवत् ॥११९॥
तोयपूर्वं प्रदायान्नमतिथिभ्यो विशां पते ।
पश्चाद् भुञ्जीत मेधावी न चाप्यन्यमना नरः ॥१२०॥
समानमेकपङ्क्त्यां तु भोज्यमन्नं नरेश्वर ।
विषं हालाहलं भुङ्क्ते योऽप्रदाय सुहृज्जने ॥१२१॥
पानीयं पायसं शक्तून् दधिसर्पिर्मधून्यपि ।
निरस्य शेषमेतेषां न प्रदेयं तु कस्यचित् ॥१२२॥
भुञ्जानो मनुजव्याघ्र नैव शङ्कां समाचरेत् ।
दधि चाप्यनुपानं वै न कर्तव्यं भवार्थिना ॥१२३॥
आचम्य चैकहस्तेन परिश्राव्यं तथोदकम् ।
अङ्गुष्ठं चरणस्याथ दक्षिणस्यावसेचयेत् ॥१२४॥
पाणिं मूर्ध्नि समाधाय स्पृष्ट्वा चाग्निं समाहितः ।
ज्ञातिश्रेष्ठमवाप्नोति प्रयोगकुशलो नरः ॥१२५॥
अद्भिः प्राणान् समालभ्य नाभिं पाणितले तथा ।
स्पृशंश्चैव प्रतिष्ठेत न चाप्यार्द्रेण पाणिना ॥१२६॥
अङ्गुष्ठस्यान्तरे रेखा ब्राह्मं तीर्थमुदाहृतम् ।
कनिष्ठिकायाः पश्चात् तु दैवं तीर्थमिहोच्यते ॥१२७॥
अङ्गुष्ठस्य च यन्मध्यं प्रदेशिन्याश्च भूमिप ।
तेन पित्रानि कुर्वीत स्पृष्ट्वापो न्यायतस्तथा ॥१२८॥
परापवादं न ब्रूयान् नाप्रियं च कदाचन ।
न मन्युः कश्चिदुत्पाद्यः पुरुषेण भवार्थिना ॥१२९॥
पतितैस्तु कथां नेच्छेद् दर्शनं च विवर्जयेत् ।
संसर्गं च न गच्छेत तथायुर्विन्दते महत् ॥१३०॥

---

१२१d : सुहृत् जने D
१२५b : अग्निं सुसमाहितः C
१३०a : श्च (for स्तु) A
१३०c : चापि नागच्छेत् C

न दिवा मैथुनं गच्छेन् न कन्यां न च बन्धकीम् ।
न चास्नातां स्त्रियं गच्छेत् तथायुर्विन्दते महत् ॥१३१॥
स्वे स्वे तीर्थे समाचम्य कार्ये समुपकल्पते ।
त्रिः पीत्वापि द्विः प्रमृज्य कृतशौचो भवेन्नरः ॥१३२
इन्द्रियाणि सकृत्स्पृश्य त्रिरभ्युक्ष्य च मानवः ।
कुर्वीत पित्र्यं दैवं च वेददृष्टेन कर्मणा ॥१३३॥
ब्राह्मणार्थे च यच्छौचं तच्च मे शृणु भूमिप ।
पवित्रं च हितं चैव भोजनाद्यन्तयोस्तथा ॥१३४॥
सर्वशौचे च ब्राह्मेण तीर्थेन समुपस्पृशेत् ।
निष्ठीव्य च तथा क्षुत्वा स्पृश्यापो हि शुचिर्भवेत् ॥१३५॥
वृद्धो ज्ञातिस्तथा मित्रं दरिद्रो यो भवेदपि ।
गृहे वासयितव्यास्ते धन्यमायुष्यमेव च ॥१३६॥
गृहे पारावता धन्याः शुकाश्च सहसारिकाः ।
गृहेष्वेते न पापाय यथा वै तैलपायिकाः ॥१३७॥
उद्दीपकाश्च गृध्राश्च कपोता भ्रमरास्तथा ।
निविशेयुर्यदा तत्र शान्तिमेव समाचरेत् ॥१३८॥
अमङ्गल्यानि चैतानि तथाक्रोशो महात्मनाम् ।
अगम्यांश्च न गच्छेत राज्ञः पत्नीं सखीं तथा ॥१३९॥
वैद्यानां बालवृद्धानां भृत्यानां च महीपते ।
बन्धूनां ब्राह्मणानां च तथा सावर्णिकस्य च ।
सम्बन्धिनां च राजेन्द्र तथायुर्विन्दते महत् ॥१४०॥
ब्राह्मणस्थपतिभ्यां च निर्मितं यन्निवेशनम् ।
तदावसेत् सदा प्राज्ञो भवार्थी मनुजेश्वर ॥१४१॥

---

१३३d : वेदादिष्टेन A देवदृष्टेन G
१४१a : °स्थपतीनां C

सन्ध्यायां न स्वपेद् राजन् विद्यां न च समभ्यसेत् ।
न भुञ्जीत च मेधावी तथायुर्विन्दते महत् ॥१४२॥
नक्तं न कुर्यात् पित्र्याणि भुक्त्वा चैव प्रसाधनम् ।
पानीयस्य क्रिया नक्तं न कार्या भूतिमिच्छता ॥१४३॥
वर्जनीयाश्च वै नित्यं शक्तवो निशि भूमिप ।
कन्या चोत्पाद्य दातव्या कुलपुत्राय धीमते ॥१४४॥
महाकुलप्रसूतां च प्रशस्तां लक्षणैर्युताम् ।
वयस्थां च महाप्राज्ञः कन्यामावोढुमर्हति ॥१४५॥
अपत्यमुत्पाद्य ततः प्रतिष्ठाप्य कुलं तथा ।
पुत्राः प्रदेया ज्ञानिषु कुलधर्मेषु भूमिप ॥१४६॥
शिरःस्नातोऽथ कुर्वीत दैवं पित्र्यमथापि च ।
नक्षत्रेण च कुर्वीत यस्मिञ्जातो भवेन्नरः ॥१४७॥
न प्रोष्ठपदयोः कार्यं तथाग्नेये च भूमिप ।
दारुणेषु च सर्वेषु प्रत्यरिं च विवर्जयेत् ॥१४८॥
प्राङ्मुखः श्मश्रुकर्माणि कारयीत समाहितः ।
उदङ्मुखो वा राजेन्द्र तथायुर्विन्दते महत् ॥१४९॥
परिवादं न च ब्रूयात् परेषामात्मनस्तथा ।
वृद्धां प्रव्रजितां चैव तथैव च पतिव्रताम् ॥१५०॥
तथा निकृष्टवर्णां च वर्णोत्कृष्टां च वर्जयेत् ।
अयोनिं च वियोनिं च न गच्छेत विचक्षणः ॥१५१॥

---

१४३d : भूमिम्° C
१४६c : ज्ञानेषु FGH
१४७c : नक्षत्रे च न H
१४७cb : repeated after १४७b in F
१४७d : यस्मिन् H
१४८d : पितरि च F
१५१d : गच्छेत् तु D

पिङ्गलां कुष्ठिनीं नारीं न त्वमावोढुमर्हसि ।
अपस्मारिकुले जातां निहीनां च विवर्जयेत् ।
श्वित्रिणां च कुलेजातां त्रयाणां मनुजेश्वर ॥१५२॥
लक्षणैरन्विता या च प्रशस्ता या च लक्षणैः ।
मनोज्ञा दर्शनीया च तां भवान् वोढुमर्हति ॥१५३॥
महाकुले निवेष्टव्यं सदृशे वा महीपते ।
अवरा पतिता चैव न ग्राह्या भूतिमिच्छता ॥१५४॥
अग्नीनुत्पाद्य यत्नेन क्रियाः समुदिताश्च याः ।
वेदे च ब्राह्मणैः प्रोक्तास्ताश्च सर्वाः समाचरेत् ॥१५५॥
न चेर्ष्या स्त्रीषु कर्तव्या रक्ष्या दाराश्च सर्वशः ।
अनायुष्या भवेदीर्ष्या तस्मादीर्ष्यां विवर्जयेत् ॥१५६॥
अनायुष्यं दिवास्वप्नं तथाभ्युदितशायिता ।
प्रगे निशायां च तथा ये चोच्छिष्टाः स्वपन्ति वै ॥१५७॥
परदारमनायुष्यमनापितोच्छिष्टता तथा ।
यत्नतो न च कर्तव्यमभ्यासं चैव पार्थिव ॥१५८॥
सन्ध्यायां च न भुञ्जीत न स्नायान् न पठेत् तथा ।
प्रयतश्च भवेत् तस्यां न च किंचित् समाचरेत् ॥१५९॥
ब्राह्मणान् पूजयेच्चापि तथा स्नात्वा नराधिप ।
अनागतायां सन्ध्यायां पश्चिमायां गृहे वसेत् ॥१६०॥
मातुः पितुर्गुरूणां च कार्यमेवानुशासनम् ।
हितं वाप्यहितं वापि न विचार्यं नरर्षभ ॥१६१॥
धनुर्वेदे च वेदे च यत्नः कार्यो नराधिप ।

---

१५२b : अर्हति C
१५४d : भूमि° G
१५६a : चेर्षा ACF
१६०a : भोजयेच्° C
१६०c–१६२b : not found in G
१६२a : यज्ञे च C

हस्तिपृष्ठेऽश्वपृष्ठे च रथचर्यासु चैव हि ॥१६२॥
यत्नवान् भव राजेन्द्र यत्नवान् सुखमेधते ।
अप्रधृष्यश्च शत्रूणां भृत्यानां स्वजनस्य च ॥१६३॥
प्रजापालनयुक्तश्च न क्षितिं लभते क्वचित् ।
मुक्तिशास्त्रं च ते ज्ञेयं शब्दशास्त्रं च पार्थिव ॥१६४॥
गन्धर्वशास्त्रं च कलाः परिज्ञेया नराधिप ।
पुराणमितिहासाश्च तथाख्यानानि यानि च ।
महात्मनां च चरितं श्रोतव्यं नित्यमेव ते ॥१६५॥
पत्नी रजस्वला या च तां न गच्छेन् नराधिप ।
स्नातां चतुर्थदिवसे रात्रौ गच्छेद् विचक्षणः ॥१६६॥
पञ्चमे दिवसे नारी षष्ठेऽहनि पुमान् भवेत् ।
एतेन विधिना पत्नीमुपगच्छेत पण्डितः ॥१६७॥
ज्ञातिसम्बन्धिमित्राणि पूजनीयानि सर्वशः ।
यष्टव्यं च यथाशक्ति यज्ञैर्विविधदक्षिणैः ॥१६८॥
अत ऊर्ध्वमरण्यं च सेवितव्यं नराधिप ।
आचारो भूतिजनन आचारो कीर्तिवर्धनः ॥१६९॥
एष ते लक्षणोद्देश आचारस्य प्रकीर्तितः ।
आचाराद् वर्धते ह्यायुराचारो हन्त्यलक्षणम् ।
आगमानां हि सर्वेषामाचारः श्रेष्ठ उच्यते ॥१७०॥

इति श्रीपद्मपुराणे स्वर्गखण्डे मान्धातृनारदसंवादे भक्ष्याभक्ष्यसदाचार-निर्णयो नाम एकत्रिंशत्तमोऽध्यायः ॥३१॥

---

१६२c : °श्वपृष्टे not found in G
१६४c : युक्ति° A
१६८a : °सम्बन्ध° F
पुष्पिका : इत्यादिमहापुराणे पाद्मे AF
त्रिंशत्° A
एकत्रिंशोऽध्यायः G

# ३२

मान्धातोवाच

भगवञ्छ्रोतुमिच्छामि यदि दृष्टं श्रुतं त्वया ।
गतायुः पुरुषः कोऽपि पुनराजीवितः क्वचित् ॥१॥

नारद उवाच

आसीद् द्रविडभूपालो विश्वकेतुर्महायशाः ।
राजा परमधर्मात्मा वेदवेदाङ्गविच्छुचिः ॥२॥
महाकुलप्रसूतश्च सदाचाररतः सदा ।
सत्यधर्मेषु निरतो देवब्राह्मणपूजकः ॥३॥
प्रजासु पितृवच्चासीत् कृतान्तसदृशोऽरिषु ।
ब्रह्मकेतुः सुतस्तस्य सर्वराजगुणान्वितः ॥४॥
एकदा नगरं तस्य जगाम भगवान् ऋषिः ।
अङ्गिराः सुमहातेजा भ्रमन् पृथ्वीं यदृच्छया ॥५॥
तमागतमभिज्ञाय विश्वकेतुर्महीपतिः ।
अमात्यभृत्यसहितस्तं निनाय स्वमालयम् ॥६॥
आतिथ्यविधिना तं च पूजयामास पार्थिवः ।
पुत्रं च परिचर्यायै न्ययोजयत धार्मिकम् ॥७॥
युवा षोडशवर्षीयो ब्रह्मकेतुर्महायशाः ।
भक्त्या परमया राजन् सिषेवे तं तपोधनम् ॥८॥
भक्ष्याभोज्यविधानेन यथारुचि मुनेर्मतम् ।
विज्ञाय परमायुः स सर्वं तस्मै न्यवेदयत् ॥९॥

---

१a : भगवन् श्रोतुं FG
२d : °विट्शुचिः ACFH °पारगः A
८a : °वर्षायुः C

तं भुक्तवन्तं सुस्निग्धं स्रग्धूपादिप्रपूजितम् ।
पर्यङ्के सुमहार्हे च स्वापयामास बालकः ॥१०॥
पादसंवाहनं चक्रे मुनेस्तस्य महात्मनः ।
राजसूनुर्ब्रह्मकेतुर्भक्त्या विनयसन्नतः ॥११॥
तुष्टस्तं मुनिरप्याह वत्स पुत्रोऽसि भूपते ।
गुणवान् रूपवाञ्छुद्धो गतभीः शुचिरात्मवान् ॥१२॥
वेदवेदाङ्गविद्यायां पारं प्राप्तोऽसि पुत्रक ।
तुष्टोऽहं तव भक्त्या वै तद् ब्रवीमि हितं तव ॥१३॥
पूर्णे तु षोडशे वर्षे राजपुत्र वयःक्रमे ।
मृत्युर्वै भविता नूनं दृष्टं मे ज्ञानचक्षुषा ॥१४॥

राजपुत्र उवाच

किमिदानीं प्रकर्तव्यं तद् भवान् वक्तुमर्हति ।
परश्वः षोडशं वर्षं मम पूर्णं भविष्यति ॥१५॥
जीवितं यदि मे न स्यान् मरणं निश्चितं त्वया ।
तन्मे यथा स्यात् स्वर्वासः कथ्यतां तन्महामुने ॥१६॥
किं गृहेणाथ राज्येन प्रजाभिर्वा तपोधन ।
विधिश्चापरिहार्योऽयं निश्चिता हि मृतिर्नृणाम् ॥१७॥
उपायो यदि कश्चिन्मे जीवितस्य भवेदथ ।
तन्मे ब्रूहि महाभाग त्वरया विदधाम्यहम् ॥१८॥

अङ्गिरा उवाच

तुष्टोऽस्मि ते महीपालपुत्रस्य सुमहामतेः ।
तेनोपायं जीवनस्य वदामि यदि शक्यते ॥१९॥

---

१२c : रूपवान् शुद्धो ACeFG
१५ : ब्रह्मकेतुरुवाच (for राजपुत्र उवाच) C
१६a : स्यात् F
१९b : सुमहामते AD
१९c : येनो° AF
: जीवितस्य C
१९d : ददामि G

इतो वाराणसीं गच्छ यत्र देवो महेश्वरः ।
उमया सह भूतैश्च वसत्यमितविक्रमः ॥२०॥
तद्दर्शनार्थं मुनयो देवाश्चैव महर्षयः ।
प्रयान्ति नित्यं संभूय नानोपायनपाणयः ॥२१॥
तत्र वैवस्वतो देवः कृतान्तः कृतनिश्चयः ।
गमिष्यति स धर्मात्मा द्रष्टुं देवं महेश्वरम् ॥२२॥
पन्थानं तस्य चारुध्य त्वं स्वपेथाः परन्तप ।
त्वामुत्थापयितुं यत्नं स करिष्यति धर्मवित् ॥२३॥
त्वयास्य पन्था दातव्यो नैव वाचा कथञ्चन ।
मनुष्यवेषधारी स भर्त्सयिष्यति तर्जनैः ।
न तेन भीस्त्वया कार्या वरं पश्चात् प्रदास्यति ॥२४॥

राजपुत्र उवाच

ज्ञास्यामि केन चिह्नेन देवं भानुमतः सुतम् ।
तन्मे ब्रूहि महाभाग येन मे जीवितं भवेत् ॥२५॥

अङ्गिरा उवाच

केचिद् विलङ्घ्य यास्यन्ति भवन्तं मृतमित्युत ।
केचित् तं मार्गमुत्सृज्य गमिष्यन्ति कदध्वना ॥२६॥
सोऽपथं नैव सेवेत न च त्वां लङ्घयिष्यति ।
समवर्ती महातेजा धर्मराजः परेतराट् ॥२७॥
स त्वं जीवयिता वत्स नान्यथा जीवनं तव ।
इत्युक्तस्तं परिक्रम्य प्रणम्य च नृपात्मजः ॥२८॥

---

२१c : संभूता C
२२a : देव A
२२b : पतनेश्वरः C
२३d : करिष्यति स G
२६b: अप्युत H
मुनिरुवाच (for अङ्गिरा उवाच) A

प्रतस्थे दूरमध्वानं रात्रावेव महीपते ।
नागरैरपरिज्ञातः पित्रा मात्रा च मारिष ॥२९॥
जगाम राजपुत्रोऽसौ रात्रौ योजनपञ्चकम् ।
प्रभातायां तु शर्वर्यां व्रजत्येव नृपात्मजः ॥३०॥
एतस्मिन्नन्तरे राजन् सुचन्द्राख्यो महीपतिः ।
केकयस्य च भूपालस्तनयं कुब्जरूपिणम् ॥३१॥
रथमारोप्य सुप्रीतः काम्पिल्यं देशमाव्रजत् ।
पाणिग्रहं कारयितुं बहुसैन्यसमावृतः ॥३२॥
तं कश्चित् कुब्जकं दृष्ट्वा कुरूपं सन्नकन्धरम् ।
कोटराक्षं पिङ्गकेशं ह्रस्वबाहुं नतोरसम् ।
न वरं मन्यते राजा कन्यायाश्च पुरा नृप ॥३३॥
सुचन्द्रस्तु स्वयं गत्वा काम्पिल्याधिपतिं नृपम् ।
गत्वायाचत तत्कन्यां स्नुषार्थे वरवर्णिनीम् ॥३४॥
स वरं द्रष्टुमभ्यागात् सुचन्द्रस्तद् विचिन्तयन् ।
अमात्यपुत्रं रुचिरं दर्शयामास तं वरम् ॥३५॥
स दृष्ट्वा चारुसर्वाङ्गं वरं राजान्वमन्यत ।
ततो वैवाहिकं लग्नं निर्णीय नृपतिर्गतः ॥३६॥
तद् दिनं समनुप्राप्य सुचन्द्रः परमोत्सुकः ।
पुत्रं तं यानमारोप्य उद्वाहाय समुद्यतः ॥३७॥
तत् कोऽपि पिशुनः सर्वं काम्पिल्यपतये नृप ।
कौरूप्यं वर्णयामास वरस्य जगतीपते ॥३८॥
अथ काम्पिल्यराजोऽसौ ज्ञात्वा स्वस्य प्रलम्भनम् ।
उद्योगं परमं चक्रे संग्रामाय महाबलः ॥३९॥

---

३०c : प्रभातायां च CDFGH
३२b : अव्रजत् F
३६ : not found in C

सुचन्द्रस्य चरस्तत्तु काम्पिल्यस्य विचेष्टितम् ।
सर्वं निवेदयामास युद्धोद्योगं महीपते ॥४०॥
सुचन्द्रस्तत्परिश्रुत्य चिन्तामाप सुदुस्तराम् ।
आहूय मन्त्रिणं प्राह सुचन्द्रः स महीपतिः ॥४१॥
विधेयं किमु मे धीर यशः केन न लुप्यते ।
महाबलः स काम्पिल्यो विप्रलब्धो मयापि सः ।
श्रेयः केन भवेद् धीर विचिन्तय महामते ॥४२॥

मन्त्र्युवाच

एवं कश्चिद् युवा चेत्स्याद् कन्दर्प इव सुन्दरः ।
पुत्रप्रतिनिधिर्भूत्वा उद्वहेत नृपात्मजाम् ।
म्रियमाणो न भार्यार्थी दद्यादुद्वाह्य सुन्दरीम् ॥४३॥
तदा तं रथमारोप्य दर्शयित्वा वरं वरम् ।
सिद्धे विवाहे तां दत्त्वा स मर्तुमुपगच्छति ॥४४॥
परिवृत्तिं वासगृहे तव पुत्रेण चात्मनः ।
कृत्वा स गच्छेद् वै मर्तुं तदा सा स्यात् स्नुषा तव ॥४५॥
एवं ब्रुवाणो राजानं ब्रह्मकेतुमपश्यत ।
उवाच मन्त्री कस्त्वं भोः कुतो यास्यसि सत्तम ॥४६॥
कान्त्या हि प्रतिभासि त्वं राजपुत्र इव प्रभो ।
श्रिया परमया दीप्यन् सत्यं कथय मा मृषा ॥४७॥
मुखं च तव नीहारक्लिष्टपद्मनिभं कथम् ।
कच्चित् त्वं बान्धवैस्त्यक्तः स्वजनेन विवर्जितः ।
भृत्यहीनः प्रयासि त्वं यानार्होऽपि पदा कथम् ॥४८॥

---

४३b : इति A
४४c : दृष्ट्वा A
४४d : अपगच्छति GH
४५c : गच्छेत AC गच्छेत् D

ब्रह्मकेतुरुवाच

श्वो मर्तव्यं मया धीर यामि वाराणसीं पुरीम् ।
विश्वकेतोर्नृपस्याहं द्रविडाधिपतेः सुतः ॥४९॥
तुष्टेनाङ्गिरसा प्रोक्तं मरणं मे दिनान्तरम् ।
किं यानेनाथ भृत्येन बान्धवैर्वाथ नागरैः ॥५०॥
तं निशम्य ततो मन्त्री राजानं सर्वमेव तत् ।
विज्ञापयामास तदा स च हृष्टो जगाद तम् ॥५१॥
विश्वकेतुसुतस्त्वं हि सर्वधर्मेषु पारगः ।
नोपकारात् परो धर्मो लोकेषु भुवि विद्यते ॥५२॥
स त्वं कुरु महाभाग वचनं मम धर्मवित् ।
कुब्जस्य मम पुत्रस्य भव प्रतिनिधिर्वरः ॥५३॥
उद्वाह्य काम्पिल्यसुतां देहि मे तनयाय भो ।
मुमूर्षुस्त्वं वचोमात्रप्रवृत्त्या चोपकुरुष्व नः ॥५४॥
ब्रह्मकेतुस्तु तच्छ्रुत्वा मनसा चिन्तयन् नृप ।
ममापि नान्त्यसंस्कारः पित्रा तु विहितः पुरा ॥५५॥
असंस्कृतस्य मरणं न च स्वर्गाय कल्पते ।
प्राप्तश्चरमसंस्कारो न त्याज्यो विधिना मया ॥५६॥
यदि जीवामि देवस्य कृपया समवर्तिनः ।
तदेयं राजपुत्री मे पत्नी सुबहुसम्मता ॥५७॥
मरिष्येऽथ तदायं मे संस्कारो विधिकल्पितः ।
उपकारोऽपि राज्ञोऽस्य तेन पुण्यं भविष्यति ॥५८॥
इति निश्चित्य मनसा ब्रह्मकेतुः स धर्मवित् ।
ओमित्युवाच राजानं स च हृष्टो महीपतिः ॥५९॥

---

५१d : च not found in C
५५a : तत्श्रुत्वा ACeFH
५५d : पित्रापि F पित्रा हि H

आरोप्य यानप्रवरं तं वरं सुवरं वरम् ।
प्रतस्थे सह सैन्येन काम्पिल्यमुपसेदिवान् ॥६०॥
काम्पिल्याधिपतिः क्रुद्धः पिशुनैः परिसूचितः ।
युद्धार्थी सह सैन्येन राजानं तमुपागमत् ॥६१॥
दूतं प्रस्थापयामास सुचन्द्रं प्रति पार्थिव ।
स आगत्य जगादेदं वचनं परिनिष्ठुरम् ॥६२॥

दूत उवाच

दर्शयित्वामात्यपुत्रं वरं कृत्वातिसुन्दरम् ।
कुब्जं स्वपुत्रमानीय उद्वाहयितुमिच्छसि ॥६३॥
विप्रलब्धोऽस्मि भवता याचता तनयां मम ।
तत् फलं सद्य एवारे लभस्व परवञ्चक ।
मद्वाणास्त्वच्छरीरात्तु पातयिष्यन्ति वै शिरः ॥६४॥

सुचन्द्र उवाच

पश्य मे तनयं दूत देवपुत्रमिहागतम् ।
केनायं कथितः कुब्जः कुरूपः पिङ्गकेशवान् ॥६५॥
इत्युक्त्वा दर्शयामास ब्रह्मकेतुं मनोहरम् ।
विवाहलक्ष्मसंयुक्तं पुष्पवाणमिवाङ्गिनम् ॥६६॥
तं दृष्ट्वा तु वरं दूतः कन्दर्पसदृशं वरम् ।
काम्पिल्यपतिमागत्य तच्च सर्वं न्यवेदयत् ॥६७॥
काम्पिल्यराजस्तच्छ्रुत्वा हृष्टात्मा पिशुनांश्च तान् ।
निर्भर्त्स्यानाययामास सुचन्द्रं सपुरोहितम् ॥६८॥
वरेण सहितं राजन् ससैन्यं ब्रह्मकेतुना ।
राजा विलोक्य तं राजन् वरं सुरसुतोपमम् ॥६९॥

---

६१d : तमुवाच सः C
६४c : एवासि CeFGH
६४e : त्वत्शरीरात् ACeFH
६८a : तत् श्रुत्वा eFH

उद्वाहं कारयामास कन्यया विधिवत्तदा ।
वृत्ते विवाहे हृष्टोऽथ सुचन्द्रः कुब्जकं सुतम् ॥७०॥
भृत्येन प्रेषयामास द्वारि वासगृहस्य च ।
निर्गते ब्रह्मकेतौ तु स प्रवेक्ष्यति मन्दिरम् ॥७१॥
ब्रह्मकेतुस्तु तत्कर्म कृत्वा वैवाहिकं नृप ।
कौतुकागारमविशद् राजपुत्र्या सहैव तु ॥७२॥
स प्रविश्य गृहं तच्च सखीः सर्वा उवाच ह ।
न स्थातव्यं च युष्माभिरस्मिन् वासगृहे शुभे ॥७३॥
विशेषं ज्ञापयिष्यामि राजपुत्रीं शुचिस्मिताम् ।
इति ताः स बहिः कृत्वा ब्रह्मकेतुर्महामतिः ॥७४॥
चिन्तयामास मनसा श्वो भावि मरणं नृप ।
चिन्तया मृतवच्छेते न च वक्ति शुभाशुभम् ॥७५॥
राजपुत्री नवोढापि यौवना च पतिव्रता ।
पतिप्राणा पतिस्निग्धा पतिदुःखेन दुःखिता ॥७६॥
व्रीडामपास्य सुश्रोणी तमुवाच मृदुस्वरा ।
भो राजपुत्र किं शेषे पुमानपि यथा मृतः ॥७७॥
मुखारविन्दमेतत् ते क्रमान्म्लानिमिवाश्नुते ।
दीर्घोऽयं तव निश्वासः कम्पयन्नुत्तरीयकम् ॥७८॥
प्रकाशयति ते सौम्य हृदयाद् दुःसहां व्यथाम् ।
तथा कण्ठध्वनिः सूक्ष्मो हृत्कम्पं वदतीव ते ॥७९॥
सत्यं कथय मे राजन् कथं त्वं हृतचित्तवत् ।
ग्लानाननोऽसि रोगीव जृम्भसे दुःखदुःखवत् ॥८०॥

---

७०b : विधिवत् तया G
७२c : अविशत् AF
७५c : मृतवत् शेते AC
७६b : स्वपतिव्रता e

अहं तेऽधिगता पत्नी धर्मेण नृपनन्दन ।
आधिं कथय केनासि दुर्मनाः सौम्यदर्शन ॥८१॥

ब्रह्मकेतुरुवाच

नाहं ते रमणस्तन्वि पत्युः प्रतिनिधिस्तव ।
सुचन्द्रस्य नरपतेः पतिस्ते तनयः किल ॥८२॥
विश्वकेतोः सुतश्चाहं ब्रह्मकेतुरिति स्मृतः ।
श्वो मर्तव्यं मया तन्वि यामि वाराणसीं पुरीम् ॥८३॥
बहिस्तिष्ठति ते कान्तः कश्चित् कालं प्रतीक्षते ।
यावदहं वरारोहे निर्गमिष्यामि मन्दिरात् ॥८४॥
भज त्वं चञ्चलापाङ्गि भार्या धर्मेण संयुता ।
कुरूपो वा सुरूपो वा स एव ते पतिः प्रियः ।
अहं प्रयामि वै मर्तुं सद्यो वाराणसीं पुरीम् ॥८५॥
इत्युक्ते राजपुत्रेण राजपुत्री पतिव्रता ।
मूर्ध्नि वज्रनिपातं सा मेने परमसुन्दरी ॥८६॥
मुक्ताफलानुकाराश्च न्यपतन्नश्रुबिन्दवः ।
हृदि कम्पान्विता बाला जगाद मृदुलस्वरा ॥८७॥

राजपुत्र्युवाच

त्वमात्मानं प्रतिनिधिं सुचन्द्रतनयस्य वै ।
ब्रवीषि यन्महाभाग ज्ञातव्यं तत् कथं मया ॥८८॥
जानामि त्वां मम पतिं गृहीतश्च करस्त्वया ।
त्वदन्यं नैव जानामि पतिं राजसुत प्रिय ॥८९॥

---

८१d : °दर्शनः B
८४c : यावदस्मि CeFGH
राजपुत्र्युवाच not found in CDFGH
८९b : तु C
८९d : राजसुतं AF

पाणिग्रहविधिं कृत्वा वह्निसाक्षिकमच्युत ।
स कथं मां परित्यज्य गन्तुमर्हसि धार्मिक ॥९०॥
नाहं भजामि कुब्जाङ्गं पतिं वा कामसुन्दरम् ।
त्वां विहाय महाभाग साहं नित्यं पतिव्रता ॥९१॥

ब्रह्मकेतुरुवाच

श्वो मर्तव्यं मया सुभ्रु प्रोक्तमङ्गिरसा मम ।
भविष्यति न तन्मिथ्या किं मया ते गतायुषा ।
तमेव भज रम्याङ्गि राजपुत्रं चिरायुषम् ॥९२॥

राजपुत्र्युवाच

मर्तव्यं भवता कान्त यदि नाम मुनीरितम् ।
तन्मयापि च मर्तव्यं पतिप्राणा पतिव्रता ।
गतायुस्त्वं यद् भवतो गतायुस्त्वं ममापि तत् ॥९३॥
अस्ति चेज्जीवनोपायस्तद् वदस्व महामते ।
तदहं ते विधास्यामि प्राणैरपि पणीकृतैः ॥९४॥

ब्रह्मकेतुरुवाच

उपायोऽपि वरारोहे तेनैव कथितं मया ।
वैवस्वतप्रसादेन यदि मे जीवनं भवेत् ॥९५॥
दर्शनं चापि तस्यैव वाराणस्यां भविष्यति ।
यास्यामि तदहं कान्ते विलम्बो नैव शोभते ॥९६॥
समयस्तु कृतो यो मे सुचन्द्रेण महीभृता ।
स कथं परिहर्तव्यस्तन्मे ब्रूहि वरानने ॥९७॥

९०d : धार्मिकम् G
९२d : मया भो D
राजपुत्री उवाच D
९५b : मम FH
९६a : तस्यैव दर्शनं चापि G

राजपुत्र्युवाच

निर्गम्य मन्दिरादस्माद् यथा ते समयः कृतः ।
तथैव कुब्जकं ब्रूहि गच्छ वासगृहं प्रति ॥९८॥
गते त्वयि महाबाहो सुचन्द्रतनयो मया ।
दूरादेव बहिः कार्यस्त्वत्पाणिग्रहणोक्तिभिः ॥९९॥
तवापि पश्चाद् दूता मे गमिष्यन्ति नृपाज्ञया ।
प्रतिक्षणं ते संवादं प्रापयिष्यन्ति मामपि ॥१००॥
मृते त्वयि मृतैवाहं जीविते जीविता पुनः ।
चितामेकां समारुह्य मृतिर्मे विधिनिर्मिता ॥१०१॥

ब्रह्मकेतुरुवाच

मुनेरङ्गिरसो वाक्यान् मरणं मे विनिश्चितम् ।
वैवस्वतेन च पुनर्जीवनं च भविष्यति ॥१०२॥
सुस्निग्धा भव सुश्रोणि गमिष्ये न चिरं कुरु ।
कालात्यये न सुलभा मम वाराणसी पुरी ॥१०३॥
इत्युक्त्वा तां समाश्वस्य ब्रह्मकेतुर्महायशाः ।
निर्जगाम गृहात् तस्मात् कुब्जकं ददृशे बहिः ॥१०४॥
तमुवाच महाराज विश्वकेतुसुतो हसन् ।
गृहाण कान्तां सुश्रोणीमहं वाराणसीं व्रजे ॥१०५॥
इत्युक्त्वा स तु राजेन्द्र मुनेरङ्गिरसो वरात् ।
वाराणसीं पुरीं प्राप्तः प्राणमात्रावशेषितः ॥१०६॥
सुचन्द्रतनयो राजन् प्रविवेश गृहं ततः ।
निर्वापयामास दीपं तस्य भृत्यो मुखानिलैः ॥१०७॥

---

९९a : महाभाग A
१०१c : चिर्ति A
१०५b : महान् (for हसन्) G

राजपुत्री तदा ज्ञात्वा प्रविष्टं तं विरूपकम् ।
दीपं च संहृतं दृष्ट्वा रुरोद विवृतस्वरा ॥१०८॥
तच्छ्रुत्वा दूरतः सख्यो मुक्तकण्ठं विरोदनम् ।
आसेदुस्तद् गृहं राजन् किं किं वाक्यैः सुदुःखिताः ॥१०९॥
अन्धकारं गृहं दृष्ट्वा सख्यस्ता भृशदुःखिताः ।
दीपं प्रज्वालयामासुः कुब्जं ता ददृशुस्ततः ॥११०॥
राजपुत्री च तं दृष्ट्वा कुब्जं विकृतरूपिणम् ।
रुदती निर्गता गेहान् मात्रे सर्वं न्यवेदयत् ॥११ ॥
तदुपश्रुत्य तन्माता काम्पिल्याधिपतिं तदा ।
सर्वं विज्ञापयामास ब्रह्मकेतोर्विचेष्टितम् ॥११२॥
एवमाभाषणं तेषां निशम्य भयविह्वलः ।
लज्जया च समाविष्टः सुचन्द्रः पृथिवीपतिः ॥११३॥
सपुत्रः सबलामात्यः स पुराय न्यवर्तत ॥११४॥
ब्रह्मकेतुस्तु भूपाल प्राप्तो वाराणसीं पुरीम् ।
शिरोरुजा समापन्नो म्लानवक्त्रः कृशाङ्गकः ।
ग्लानेन्द्रियगणो राजन् पपात पथि दुःखितः ॥११५॥
वायूनां चलतां स्थानाद् वेगेन धर्षिताङ्गकः ।
हस्तपादं क्षिपन्नासीन् महाराज पुनः पुनः ॥११६॥
एतस्मिन्नन्तरे देवा ऋषयश्च तपोधनाः ।
द्रष्टुं विश्वेश्वरं देवं तं पन्थानं समागताः ॥११७॥
केचित् तं लङ्घयित्वैव ययुः केचित् कदध्वना ।
न चोत्थापयितुं शक्ता ब्रह्मकेतुं नृपात्मजम् ॥११८॥

---

१०९a : तत् श्रुत्वा ACeFH
१११c : गेहात् AH
११४a : सपुत्रश्च महामान्यः C
११६a : स्थानात् CeFGH
११६ab : not found in C
११६c : आसीत् H

यमो मनुजरूपेण तमाह नृपनन्दनम् ।
उत्तिष्ठ वत्स पन्थानं त्यज पश्यामि शंकरम् ॥११९॥

ब्रह्मकेतुरुवाच
शक्तिर्मे नास्ति चलितुमिन्द्रियाण्यस्थिराणि मे ।
मुहूर्तमपि मे नास्ति विलम्बो मरणे किल ॥१२०॥
चलन्ति वायवो ह्यूर्ध्वमिन्द्रियाणि गतानि च ।
याहि मां त्वं विलङ्घ्यैव पथा वान्येन शंकरम् ॥१२१॥

यम उवाच
मृतप्रायो मृतस्त्वं हि न स्पृशामि ततः किल ।
प्राणिनो लङ्घने दोषो गमने च कदध्वना ॥१२२॥
यावन्नोदेति सविता तावत् पश्यामि शंकरम् ।
उत्तिष्ठ दुःखकष्टेन स्वापो युक्तो न ते पथि ॥१२३॥
धक्ष्यामि त्वां चक्षुषैव वह्निमुत्पाद्य दुःसहम् ।

ब्रह्मकेतुरुवाच
धक्ष्यसि त्वं चक्षुषैव यदि जातेन वह्निना ॥१२४॥
देहसंस्कार एतावान् भवेन्मे विधिकल्पितः ।
इत्युक्त्वा सोऽभवत् तूर्ष्णीं प्राणाश्चोष्ठतटं गताः ॥१२५॥
तदालोक्य यमस्तस्य गतायुस्त्वं विचिन्तयन् ।
उवाच न गतायुस्त्वं शतायुर्भव सम्प्रति ॥१२६॥
इत्युक्ते वचने तेन ब्रह्मकेतोः शरीरतः ।
उत्क्रान्ता अपि ते प्राणाः पुनराविविशुर्नृप ।
इन्द्रियाणि पुनस्तानि स्वानि स्थानानि भेजिरे ॥१२७॥
उत्तस्थौ च नरव्याघ्र ब्रह्मकेतुर्महाबलः ।
यमः पन्थानमासाद्य तथैवान्तरधीयत ॥१२८॥

---

१२३c : दुष्ट कष्टेन eFGH
१२७a : वचसा C

दूतः काम्पिल्यराजस्य तं विलोक्य समुत्थितम् ।
आगत्य तं च वृत्तान्तं राज्ञे सर्वं न्यवेदयत् ।।१२९।।

राजा तु तत् समाकर्ण्य यानं हेमपरिष्कृतम् ।
चतुर्भिर्वाजिभिर्युक्तं जवनैः समप्रेषयत् ।।१३०।।

दूतास्तं रथमारोप्य बहुमङ्गलभूषितम् ।
आनिन्युस्तत्पुरं राजन् पताकातोरणान्वितम् ।।१३१।।

स समागत्य राजेन्द्र सर्वैः श्वशुरबान्धवैः ।
भार्यया च मुदं लेभे सर्वा मुमुदिरे प्रजाः ।।१३२।।

ततस्तां समनुज्ञाप्य सभार्यः स नृपात्मजः ।
प्राप्तः पितुः पुरं सर्वं वृत्तान्तं सन्न्यवेदयत् ।।१३३।।

इति ते कथितं राजन् मृतोऽपि पुनरुत्थितः ।
ब्रह्मकेतुर्महाभागो विश्वकेतोर्यथासुतः ।।१३४।।

इति श्रीपद्मपुराणे स्वर्गखण्डे मान्धातृनारदसंवादे ब्रह्मकेतूपाख्यानं
नाम द्वात्रिंशत्तमोऽध्यायः ।।३२।।

---

पुष्पिका : नाम not found in CDGH

इत्यादिमहापुराणे पाद्मे······एकत्रिंशत्तमोऽध्यायः A

# ३३

मान्धातोवाच

भगवन् यत् त्वया प्रोक्तं भवेन सुमहात्मना ।
अभिवादविपर्यासाद् दक्षाच्छापः सुदारुणः ॥१॥
प्राप्तः श्वशुरतः पूर्वं तदेव वद विस्तरात् ।

नारद उवाच

ब्रह्मणो मानसः पुत्रो दक्षो नाम महातपाः ॥२॥
उपयेमे स तनयां मनोः स्वायम्भुवस्य वै ।
प्रसूतिं नाम राजेन्द्र सर्वसद्गुणशालिनीम् ॥३॥
स तस्यां जनयामास षोडशोत्पललोचनाः ।
कन्याः कमलगन्धाढ्या रूपेणाप्रतिमास्तथा ॥४॥
तासां त्रयोदश ददौ धर्माय नृपनन्दन ।
कश्यपाय तथा द्वे तु एकां प्रादाच्च शम्भवे ॥५॥
एकदा तु महाराज मेरोर्मूर्धनि काञ्चने ।
आदिष्टा ब्रह्मणा यज्ञमकार्षुर्विश्वसृग्गणाः ॥६॥
तस्मिन् निमन्त्रिताः सर्वे सेन्द्रा देवा महर्षयः ।
आजग्मुः परया प्रीत्या तथा गन्धर्वकिन्नराः ॥७॥
सिद्धाश्च यक्षरक्षांसि विद्याधरमहोरगाः ।
तत्रोपविविशुर्देवा यथास्थानं यथासनम् ॥८॥
ब्रह्मा विष्णुश्च शर्वश्च एकासनगतास्त्रयः ।
वेष्टिता मुनिसङ्घेन देवैश्चापि सवासवैः ॥९॥

---

१c : °विपर्यसात् CeFH
१d : दक्षात् शापः FGH
९b : एकासनतः G

अथ तत्रागमद् दक्षस्तेजसा हनुमानिव ।
दृष्ट्वा तं च समायातं ये निषण्णाः सुरादयः ॥१०॥
विना विष्णुं च रुद्रं च तथैव कमलासनम् ।
उत्तस्थुः सर्वतः सर्वे कृताञ्जलिपुटा नृप ॥११॥
स प्रविश्य सभां तां तु प्रणम्य कमलासनम् ।
विष्णुं च सर्वदेवेशं निषसादासने नृप ॥१२॥
प्रत्युत्थानक्रियाहीनमभिवादनवर्जितम् ।
भवं जामातरं दृष्ट्वा स चुकोप प्रजापतिः ॥१३॥
पाणौ पानीयमानीय भवं शप्तुं प्रचक्रमे ।
तं वारयामास हरिर्ब्रह्मापि कृतनिश्चयम् ॥१४॥
स उवाच दधत् पाणौ पानीयं सदसः पतिम् ।
एतं पश्यसि दुर्वृत्तं भवं जामातरं मम ॥१५॥
न गुरुं मन्यते धृष्टो गौरवेण तमोऽन्वितः ।
प्रत्युत्थानाभिवादार्हं न मां सत्कृतवानयम् ।
तदयं दण्ड्यतां प्राप्तो न यज्ञे भागमर्हति ॥१६॥
प्रेतवासः प्रेतसङ्गी चिताभस्मविलेपनः ।
बिभ्रत् कङ्कालमालां वै न यज्ञे भागमर्हति ॥१७॥
व्यालयज्ञोपवीताढ्यो जटामुकुटमण्डितः ।
दिगम्बरो विरूपाक्षो न यज्ञे भागमर्हति । १८॥
प्रेतपार्श्वदसंवीतो मादकद्रव्यभोजनः ।
न देवैः सह दुर्वृत्तो भागमर्हति यज्ञतः ॥१९॥

---

१५a : स not found in G
१५b : पतीन् F
१५d : भवं not found in C
१७a : प्रेतावासे AeF
१७c : काञ्चनमालां C
१६d-१८d : not fonud in G
१९b : सदा कुद्रव्य° D

इह शापं विसृज्यासौ निर्गतः सदसस्तदा ॥२०॥
तं शशाप ततो नन्दी रोषेणारुणितेक्षणः ।
भगवन्तं महादेवमतत्त्वज्ञः प्रजापतिः ॥२१॥
यदनिन्दत् सभामध्ये दक्षो गर्वं समुद्वहन् ।
अचिरात् छागवक्त्रोऽसौ भविष्यति विमूढधीः ॥२२॥
ये चामुमनुवर्तन्ते द्विजा शर्वद्विषोऽपि ये ।
ते भवन्तु दुराचारा मानदम्भसमन्विताः ।
विमुखास्तत्त्वमार्गाच्च वृथायज्ञकृतश्रमाः ॥२३॥
तच्छ्रुत्वा नन्दिवचनं भृगुर्ब्रह्मकुलं प्रति ।
शशाप रोषताम्राक्षः शैवान् प्रति महातपाः ॥२४॥
शिवदीक्षां प्रकुर्वन्तो भवन्तु छद्मवेशिनः ।
पाषण्डिनः सर्वधर्मपरित्यक्ताः सुराभुजः ॥२५॥
एवं परस्परेणोक्तैः सद्धर्मान् प्रायशो नृप ।
प्रणष्टानवलोक्याथ भवः किञ्चिदनुक्तवान् ।
न्यवर्तत स्ववासाय सभृत्यो वृषवाहनः ॥२६॥
अन्ये देवास्तं समाप्य यथाविधि महाक्रतुम् ।
प्रपद्यन्ते स्वधामानि स्वानि स्वानि महीपते ॥२७॥
गते बहुतिथे काले स्वयं दक्षः प्रजापतिः ।
समारेभे महाबाहो अश्वमेधं क्रतूत्तमम् ॥२८॥
सर्वान् देवान् समाहूय जुहाव हविरात्मवान् ।
विना भवेन देवेन स्वयंशप्तेन तेजसा ॥२९॥
ब्रह्मा विष्णुश्च तज्ज्ञात्वानाह्वानं तु कपर्दिनम् ।

२४a : तत् श्रुत्वा FH
२६b : स धर्मान् G
२९a : समाहृत्य FH
३०a : तत् ज्ञात्वा A

नाजगाम सदस्तच्च ये च रुद्रानुयायिनः ।
तेऽपि तान् दूरतो यज्ञं वर्जयामासुरेव हि ॥३०॥
दक्षस्य दुहिता या तु भवपत्नी सती सती ।
सा तत्सोढुमक्षमासीदनाह्वानं भवस्य यत् ।
स्वयं जगाम तद् यज्ञं वारितापि कपर्दिना ॥३१॥
तत्र दृष्ट्वा सुरान् सर्वान् यज्ञभागभुजः सती ।
विना रुद्रं महादेवं सा चुकोप मनस्विनी ।
जगर्ह पितरं सा तु रोषारुणितलोचना ॥३२॥
विना रुद्रं पितः कोऽयमारम्भस्तव दुष्कृतः ।
ऐश्वर्यमदमत्तोऽसि न वेत्सि दैवतं महत् ॥३३॥
हरद्विषस्तनोर्जाता यदहं पापभागिनी ।
इत्युक्त्वा तत्यजे प्राणान् सती दाक्षायणी तदा ॥३४॥
तत्पार्श्वदा महाघोरा यज्ञं हन्तुं प्रचक्रमुः ।
तदालोक्य भृगुः क्रुद्धो यज्ञात् कृत्यामभावयत् ॥३५॥
तेन ते ताडिता राजन् सर्वतो रुद्रपार्श्वदाः ।
रुद्रं विज्ञापयामासुः सतीप्राणविसर्जनम् ॥३६॥
तच्छ्रुत्वाथ महादेवः कृत्यां स्वां वै विनिर्ममे ।
उत्थितो वीरभद्रोऽथ महाघोरो महाबलः ॥३७॥
स रुद्रपार्श्वदैर्घोरैः सह प्रायान् महाक्रतुम् ।
बभञ्ज यज्ञपात्राणि गृहाणि च पुराणि च ॥३८॥
भृगोः श्मश्रूणि सहसा लुलुञ्चू रुद्रपार्श्वदाः ।
भगस्य नेत्रे व्यलुनाद् वीरभद्रः प्रतापवान् ॥३९॥

---

३०c : तं (for तत्) G
३१a : सा (for या) G
३३b : दुष्कृतिः eDH
३५c : आलोक्य च C
३६d : °विवर्जनम् G
३७a : तत् श्रुत्वाथ ACeFH

पातयामास दन्तांश्च पूष्णः क्रुद्धो महीपते ।
शिरश्चिक्षेप दक्षस्य छित्वाग्नौ च महाबलः ॥४०॥
विभिन्नगात्रा अन्ये च ये देवाः समुपागताः ।
विध्वंस्य यज्ञं सर्वं तं प्रतस्थू रुद्रपार्षदाः ॥४१॥
एवं विनाशिते यज्ञे देवा ब्रह्माणमाययुः ।
सर्वं निवेदयामासुर्ब्रह्मणे परमेष्ठिने ॥४२॥
ब्रह्माथ तदुपश्रुत्य देवैः सह महेश्वरम् ।
प्रसादयामास विभुं पुनर्यज्ञस्य सिद्धये ॥४३॥
आशुतोषस्तुतोषाशु ददौ तत्र वरान् हरः ।
यज्ञः सिद्धिमवाप्नोतु रक्तश्मश्रुर्भृगुर्भवेत् ॥४४॥
चक्षुषा यजमानस्य भगः पश्यतु याजनम् ।
पिष्टभुग् भवतात् पूषा अद्भिर्वा यजतो मखम् ॥४५॥
देवाः प्रकृतसर्वाङ्गा भवन्तु वचनान्मम ।
दक्षो जीवतु पश्चाच्च क्षत्रयोनौ जनिष्यति ॥४६॥
एवं प्रसन्नो भगवान् ययौ दक्षाध्वरं प्रति ।
छागवक्त्रेण दक्षस्य कबन्धं तन्न्ययोजयत् ॥४७॥
शिवाज्ञया प्राप्तजीवो यज्ञं तं पुनराहरत् ।
भागं ददौ महेशाय दक्षो विश्वसृजेरितः ॥४८॥
एतत् ते सर्वमाख्यातं यथा शप्तो महेश्वरः ।
दक्षेण ब्रह्मपुत्रेण अभिवादविपर्ययात् ॥४९॥

इति श्रीपद्मपुराणे स्वर्गखण्डे दक्षशापस्त्रयस्त्रिंशत्तमोऽध्यायः ॥३३॥

---

४४a : आशुतोषः स्तुतो ह्याशु ABF
४४c : यज्ञश्च······ ··आप्नोतु C
४६d : भविष्यति G
४७d : तं H
४८d : दक्षः ACeGH
पुष्पिका : इत्यादिमहापुराणे पाद्मे A
द्वात्रिंशत्° A

मान्धातोवाच

किं कुर्वाणा नरा यान्ति स्वर्गलोकं महामुने ।
किं कुर्वाणाश्च नरकान् तन् मे कथय सुव्रत ॥१॥

नारद उवाच

दानेन तपसा चैव सत्येन च महीपते ।
ये धर्ममनुवर्तन्ते ते नराः स्वर्गगामिनः ॥२॥
शुश्रूषाभिस्तपोभिश्च विद्यामादाय पार्थिव ।
ये प्रतिग्रहनिस्नेहास्ते नराः स्वर्गगामिनः ॥३॥
भयात् पापात् तथा बाधाद् दारिद्र्याद् व्याधिकर्षणात् ।
ये मोचयन्ति मनुजांस्ते नराः स्वर्गगामिनः ॥४॥
क्षमावन्तश्च धीराश्च धर्मकार्येषु चोत्थिताः ।
मङ्गलाचारसम्पन्नाः पुरुषाः स्वर्गगामिनः ॥५॥
निवृत्ता मधुमांसेभ्यः परदारेभ्य एव च ।
निवृत्ताश्चैव मद्येभ्यस्ते नराः स्वर्गगामिनः ॥६॥
वस्त्राभरणदातारो भक्ष्यपानान्नदास्तथा ।
कुटुम्बानां च दातारस्ते नराः स्वर्गगामिनः ॥७॥
अपराद्धेषु सस्नेहा मृदवो मृदुवत्सलाः ।
आराधनसुखाश्चापि पुरुषाः स्वर्गगामिनः ॥८॥
आश्रमाणां च कर्तारः कुलानां चैव पार्थिव ।

---

३ : not found in C
४-५ : not found in AF
८c : आराधनं F
६a : तु AG
: F reads ६ and ७ after ६

देशानां नगराणां च ते नराः स्वर्गगामिनः ॥९॥
सर्वहिंसानिवृत्ताश्च नराः सर्वसहाश्च ये ।
ये सर्वाश्रयभूताश्च ते नराः स्वर्गगामिनः ॥१०॥
मातरं पितरं चैव शुश्रूषन्ते जितेन्द्रियाः ।
भ्रातॄणां चैव सस्नेहास्ते नराः स्वर्गगामिनः ॥११॥
आढ्याश्च बलवन्तश्च यौवनस्थाश्च भूमिप ।
ये वै जितेन्द्रिया वीरास्ते नराः स्वर्गगामिनः ॥१२॥
विहारावसथोद्यानकूपारामसभाप्रपा- ।
वप्राणां चैव कर्तारस्ते नराः स्वर्गगामिनः ॥१३॥
सुवर्णस्य च दातारो गवां चैव नरर्षभ ।
यानवाहनदा ये च ते नराः स्वर्गगामिनः ॥१४॥
वैवाहिकानां द्रव्याणां प्रैष्यानां च महीपते ।
दातारो वाससां चैव पुरुषाः स्वर्गगामिनः ॥१५॥
निवेशनानां क्षेत्राणां वसतीनां च मारिष ।
दातारः प्रार्थितानां च पुरुषाः स्वर्गगामिनः ॥१६॥
रसानां चाथ बीजानां धान्यानां च महीपते ।
स्वयमुत्पाद्य दातारः पुरुषाः स्वर्गगामिनः ॥१७॥
यस्मिंस्तस्मिन् कुले जाता बहुपुत्राः शतायुषः ।

---

९cd : ये प्रतिग्रहनिस्नेहास्ते नराः स्वर्गगामिनः G
१०-११ : not found in A
१०c : ये not found in D
: सर्वस्याश्रय° CGH सर्वस्याश्रम° B ये सर्वाश्रम° F
११ : not found in G
१२c : घोराः C
१२-१३ : not found in C
F reads १३ after ११ and then १२
१४ : not found in ACF
१७-१८ : not found in G
A reads १३, १२, १५ after १६

सानुक्रोशा जितक्रोधाः पुरुषाः स्वर्गगामिनः ॥१८॥
एवमुक्तममुत्रार्थं दैवं पित्र्यं च भूमिप ।
धर्ममेतन्मुनिप्रोक्तं विहितं च महात्मभिः ॥१९॥
दुष्कर्माण्यपि वक्ष्यामि नरकं यैः प्रयान्ति हि ।
सर्वेष्वेव तु कार्येषु देवपूर्वेषु भूमिप ।
हन्ति पुत्रान् पशून् कृत्स्नान् ब्राह्मणातिक्रमः कृतः ॥२०॥
गुर्वर्थं वा भयार्थं वा वर्जयित्वा महीपते ।
येऽनृतं कथयन्ति स्म ते वै निरयगामिनः ॥२१॥
परदाराभिहर्तारः परदाराभिमर्षिणः ।
परदारप्रयोक्तारस्ते वै निरयगामिनः ॥२२॥
अनाथां प्रमदां बालां वृद्धां भीतां तपस्विनीम् ।
वञ्चयन्ति नरा ये च ते वै नरकगामिनः ॥२३॥
ये परस्वापहर्तारः परस्वानां च नाशकाः ।
सूचकाश्च परेषां हि ते नरा नरकानुगाः ॥२४॥
सूचकाः सन्धिभेत्तारः परवृत्त्युपजीविनः ।
अकृतज्ञाश्च मित्राणां ते वै निरयगामिनः ॥२५॥
प्रपानां च सभानां च संक्रमाणां च मारिष ।
आगाराणां च भेत्तारो नरा निरयगामिनः ॥२६॥
पाषण्डा दूषकाश्चैव समयानां च दूषकाः ।
ये प्रत्यवस्थिताश्चैव ते वै निरयगामिनः ॥२७॥

---

२०b : प्रयान्त्यपि A
२०d : दैव° CG
२२-२३ : not found in C
C reads २६ after २१
२५b : °वित्तो° C

वृत्तिच्छेदं गृहच्छेदं दानच्छेदं च पार्थिव ।
मित्रच्छेदं तथाशायाः कृत्वा नरकभागिनः ॥२८॥
विषमव्यवहाराश्च विषमाश्चैव वृद्धिषु ।
लाभेषु विषमाश्चैव नरा निरयगामिनः ॥२९॥
कृताशं कृतनिर्वेशं कृतभक्तं कृतश्रमम् ।
भेदैर्ये व्यपकर्षन्ति ते वै निरयगामिनः ॥३०॥
द्यूतसंव्यवहाराश्च निष्परीक्षाश्च मानवाः ।
प्राणिहिंसाप्रवृत्ताश्च ते वै निरयगामिनः ॥३१॥
वेदविक्रयिणश्चैव वेदानां चैव दूषकाः ।
वेदानां लेखकाश्चैव ते वै निरयगामिनः ॥३२॥
केशविक्रयका राजन् विषविक्रयकाश्च ये ।
क्षीरविक्रयकाश्चैव ते वै निरयगामिनः ॥३३॥
चतुराश्रमबाह्याश्च श्रुतिबाह्याश्च ये नराः ।
विकर्मभिश्च जीवन्ति ते वै निरयगामिनः ॥३४॥
ब्राह्मणानां गवां चैव कन्यानां च महामते ।
येऽन्तरं यान्ति कार्येषु ते वै निरयगामिनः ॥३५॥
शास्त्रविक्रयकाश्चैव कर्तारश्च महीपते ।
शल्यानां धनुषां चैव ते वै निरयगामिनः ॥३६॥
शिलाभिः शङ्कुभिर्वापि श्वभ्रैर्वा मनुजर्षभ ।
ये मार्गमवरुन्धन्ति ते वै निरयगामिनः ॥३७॥
अगोप्तारश्च राजानो बलिषड्भागतस्कराः ।
समर्थाश्चाप्यदातारस्ते वै निरयगामिनः ॥३८॥

---

२८d : °गामिनः G
२९d : ते वै H
A reads २८ after ३१
३४a : चातुराश्रम्यबाह्याश्च H
२१, २७, ३१, ३४, ३५ : not found in G

शान्तान् दान्तानथ प्राज्ञान् दीर्घकालसहोषितान् ।
त्यजन्ति कृतकृत्यान् ये ते वै निरयगामिनः ॥३९॥

बालानामथ वृद्धानां दासानां चैव ये नराः ।
अदत्त्वा भक्षयन्त्यग्रे ते वै निरयगामिनः ॥४०॥

इत्येतत् कथितं राजन् धर्माधर्मविनिर्णयम् ।
विमृश्य पुरुषः कर्म धर्ममेव समाचरेत् ॥४१॥

इति श्रीपद्मपुराणे स्वर्गखण्डे परलोकनिर्णयो नाम
चतुस्त्रिंशत्तमोऽध्यायः ॥३४॥

---

३९a : प्रज्ञान् (for प्राज्ञान्) H
३९c : कृतकृत्या H
३९-४० : not found in G
पुष्पिका : इत्यादिमहापुराणे पाद्मे AF
त्रयस्त्रिंशत्° A

# ३५

मान्धातोवाच

कीदृशेभ्यः प्रदातव्यं भवेच्छ्राद्धं महामुने ।
द्विजेभ्यः किंगुणेभ्यो वा तन्मे व्याख्यातुमर्हसि ॥१॥

नारद उवाच

ब्राह्मणान् न परीक्षेरन्नन्ये वर्णास्त्रयो नृप ।
दैवे कर्मणि पित्र्ये च न्याय्यमाहुः परीक्षणम् ॥२॥
देवताः पूजयन्तीह दैवेनैवेह तेजसा ।
उपेत्य तस्माद् देवेभ्यः सर्वेभ्यो दापयन्नरः ॥३॥
श्राद्धे त्वथ महाराज परीक्षेद् ब्राह्मणं बुधः ।
कुलशीलवयोरूपैर्विद्ययाभिजनेन च ।
तेषामन्ये पङ्क्तिदूषास्तथान्ये पङ्क्तिपावनाः ॥४॥
अपाङ्क्तेयास्तु ये राजन् कीर्तयिष्यामि ताञ्छृणु ।
कितवो भ्रूणहा यक्ष्मी पशुपालो निराकृतिः ॥५॥
ग्रामप्रेष्यो वार्धुषिको गायकः सर्वविक्रयी ।
अगारदाही गरदः कुण्डाशी सोमविक्रयी ॥६॥
सामुद्रिको राजदूतस्तैलिकः कूटकारकः ।
पित्रा विवदमानश्च यस्य चोपपतिर्गृहे ॥७॥
अभिशस्तस्तथा स्तेनः शिल्पं यश्चोपजीवति ।

---

१ab : भवेच्छ्राद्धं प्रदातव्यम् G
३b : देवेनै° D
५b : तान् श्रृणु BFH
६b : गायनः eG
७b : स्त्रैणकः F
: कट° not found in D
८a : अभिशप्तः A

पर्वकारश्च सूची च मित्रध्रुक् पारदारिकः ॥८॥
अव्रतानामुपाध्यायः काण्डपृष्ठस्तथैव च ।
श्वभिश्च यः परिक्रामेद् यः शुना स्पृष्ट एव च ॥९॥
परिवृत्तिस्तु यश्च स्याद् दुश्चर्मा गुरुतल्पगः ।
कुशीलवो देवलको नक्षत्रैर्यश्च जीवति ।
ईदृशा ब्राह्मणा ये च अपाङ्क्तेयास्तु ते मताः ॥१०॥
रक्षांसि गच्छते हव्यं यदेषां तु प्रदीयते ।
श्राद्धे भुक्त्वा महाराज दुश्चर्मा गुरुतल्पगः ।
श्राद्धं नाशयते तस्य पितरोऽपि न भुञ्जते ॥११॥
सोमविक्रयिणे दत्तं विष्ठातुल्यं भवेन्नृप ।
भिषजे शोणितसमं नष्टं देवलके तथा ॥१२॥
अप्रतिष्ठं वार्धुषिके निष्फलं परिकीर्तितम् ।
बहुवाणिजके दत्तं नेह नामुत्र तद् भवेत् ।
भस्मनीव हुतं हव्यं तथा पौनर्भवे द्विजे ॥१३॥
ये तु धर्मव्यपेतेषु चरित्रापगतेषु च ।
हव्यं कव्यं प्रयच्छन्ति तेषां तत् प्रेत्य नश्यति ॥१४॥
ज्ञानपूर्वं तु ये तेभ्यः प्रयच्छन्त्यल्पबुद्धयः ।
पुरीषं भुञ्जते तस्य पितरः प्रेत्य निश्चितम् ॥१५॥

---

८c : गर्वकारः H
९d : शुनामष्ट F शुनामष्टे CDGH
९a-१०b not found in C
१० : not found in A
१०a : परिवृत्तिश्च FH
११ : not found in A
१३f : द्विज D
१४c : कव्यं हव्यं G
१४d : प्रायो (for प्रेत्य) C

एतान् विद्धि महाराज अपाङ्क्तेयान् द्विजाधमान् ।
शूद्राणामुपदेशं तु ये कुर्वन्त्यल्पतेजसः ॥१६॥
षष्टिं काणः शतं खञ्जाः स्वित्री यावत् प्रपश्यति ।
पङ्क्त्यां समुपविष्टायां तावद् दूषयते नृप ॥१७॥
यद् वेष्टितशिरा भुङ्क्ते यद् भुङ्क्ते दक्षिणामुखः ।
सोपान्तकश्च यद् भुङ्क्ते सर्वं विद्यात् तदासुरम् ॥१८॥
असूयते च यद् दत्तं यच्च श्रद्धाविवर्जितम् ।
सर्वं तदसुरेन्द्राय ब्रह्मा भागमकल्पयत् ॥१९॥
श्वानश्च पङ्क्तिदूषाश्च नावेक्षेरन् कथञ्चन ।
तस्मात् परिवृते दद्यात् तिलांश्चान्ने विकीरयेत् ॥२०॥
तिलैर्विरहितं श्राद्धं कृतं क्रोधवशेन च ।
यातुधानाः पिशाचाश्च विप्रलुम्पन्ति तद्धविः ॥२१॥
अपाङ्क्त्यान् यावतः पङ्क्त्यां भुञ्जानाननुपश्यति ।
तावत् फलाद् भ्रंशयति दातारं तस्य बालिशम् ॥२२॥
इमे हि मनुजश्रेष्ठ विज्ञेयाः पङ्क्तिपावनाः ।
विद्यावेदव्रतस्नाता ब्राह्मणाः सर्व एव हि ।
सदाचारपराश्चैव विज्ञेयाः पङ्क्तिपावनाः ॥२३॥
मातापित्रोर्यश्च वश्यः श्रोत्रियो दशपूरुषः ।
ऋतुकालाभिगामी च धर्मपत्नीषु यः सदा ।
वेदविद्याव्रतस्नातो विप्रः पङ्क्तिं पुनात्युत ॥२४॥

१६a : महाबाहो GH
१६d : °चेतसः DG
१८c : यो C
१९b : श्रद्धादिवर्जितं C
२२a : आपाङ्क्त्यो H अपाङ्क्त्यो C
२३c-f : not found in C
२४e : विद्यावेद° FGH

अथर्वशिरसोऽध्येता ब्रह्मचारी यतव्रतः ।
सत्यवादी धर्मशीलः स्वकर्मनिरतश्च यः ॥२५॥
ये च पुण्येषु तीर्थेषु अभिषेककृतश्रमाः ।
मखेषु च समस्तेषु भवन्त्यवभृथप्लुताः ॥२६॥
अक्रोधना ह्यचपलाः शान्ता दान्ता जितेन्द्रियाः ।
सर्वभूतहिता ये च श्राद्धेष्वेतान् निमन्त्रयेत् ॥२७॥
एतेषु दत्तमक्षय्यमेते वै पङ्क्तिपावनाः ।
यतयो मोक्षधर्मज्ञा योगाः सुचरितव्रताः ॥२८॥
ये चेतिहासं प्रयताः श्रावयन्ति द्विजोत्तमाः ।
ये च भाष्यविदः केचिद् ये च व्याकरणे रताः ॥२९॥
अधीयते पुराणं ये धर्मशास्त्राणि चाप्युत ।
अधीत्य च यथान्यायं विधिवत् तस्य कारिणः ॥३०॥
उपपन्नो गुरुकुले सत्यवादी सहस्रदः ।
अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च ॥३१॥
यावदेते प्रपश्यन्ति पङ्क्त्यां तावत् पुनन्ति च ।
ततो हि पावनात् पङ्क्त्या उच्यन्ते पङ्क्तिपावनाः ॥३२॥
अनृत्विगनुपाध्यायः स चेदग्रासनं व्रजेत् ।
ऋत्विग्भिरननुज्ञातः पङ्क्त्या हरति दुष्कृतम् ॥३३॥
अथ चेद् वेदवित् सर्वैः पङ्क्तिदोषैर्विवर्जितः ।
न च स्यात् पतितो राजन् पङ्क्तिपावन उच्यते ॥३४॥

---

२५b : व्रतचारी G
२५c : धर्मशीलः सत्यवादी G
२५d : स्वधर्म° G
२६a : पुण्ये च G
२७b : शान्ता (for दान्ता) D
२८c : मुख्य° A
२९b : द्विजोत्तमान् FH
३१c : देवेषु (for वेदेषु) ABF

तस्मात् सर्वप्रयत्नेन परीक्ष्यामन्त्रयेद् द्विजान् ।
स्वकर्मनिरतान् शान्तान् कुले जातान् बहुश्रुतान् ॥३५॥
यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च ।
न प्रीणाति पितॄन् देवान् स्वर्गं च न स गच्छति ॥३६॥
ब्राह्मणो ह्यनधीयानस्तृणाग्निरिव शाम्यति ।
तस्मिञ्छ्राद्धं न दातव्यं न हि भस्मनि हूयते ॥३७॥
ऋषीणां समये नित्यं ये चरन्ति महीपते ।
निश्चिताः सर्वधर्मज्ञास्तान् देवा ब्राह्मणान् विदुः ॥३८॥
स्वाध्यायनिष्ठा निरता ज्ञाननिष्ठास्तथैव च ।
तपोनिष्ठाश्च बोद्धव्याः कर्मनिष्ठाश्च पार्थिव ।
कव्यानि ज्ञाननिष्ठेभ्यः प्रतिष्ठाप्यानि भूमिप ॥३९॥
तत्र ये ब्राह्मणान् केचिन् न निन्दन्ति हि ते वराः ।
ये तु निन्दन्ति जल्पेषु न ताञ्छ्राद्धेषु योजयेत् ॥४०॥
ब्राह्मणा निन्दिता राजन् हन्युस्त्रैपुरुषं सदा ।
वैखानसानां वचनमृषीणां श्रूयते नृप ॥४१॥
दूरादेव निरीक्षेत ब्राह्मणान् वेदपारगान् ।
प्रियो वा यदि वा द्वेष्यस्तेषां न श्राद्धमावपेत् ॥४२॥

इति श्रीपद्मपुराणे स्वर्गखण्डे श्राद्धपात्रनिर्णयो नाम पञ्चत्रिंशोऽध्यायः ॥३५॥

---

३७c : तस्मिन् श्राद्धं ACeFH
४०d : तान् श्राद्धेषु ACeFH
४१b : त्रिपुरुषं D ते पुरुषं C
पुष्पिका : इत्यादिमहापुराणे पाद्मे A
चतुस्त्रिंशत्तमोऽध्यायः A

मान्धातोवाच

चातुराश्रम्यमुक्तं ते चातुर्वर्ण्यं तथा मुने ।
राष्ट्रस्य करणीयं यत् तन्मे कथय नारद ॥१॥

नारद उवाच

राष्ट्रस्य करणीयं तु राजन् राज्ञोऽभिषेचनम् ।
अराजकं हि यद् राष्ट्रं दस्यवोऽभिभवन्त्युत ॥२॥
राजहीनेषु राष्ट्रेषु धर्मो नैवावतिष्ठते ।
परस्परं च खादन्ति सर्वे सर्वमराजकम् ॥३॥
इन्द्रमेव प्रवृणुते यद् राजानमिति श्रुतिः ।
यथा शक्रस्तथा राजा संपूज्यो भूतिमिच्छता ॥४॥
नाराजकेषु राष्ट्रेषु हव्यमग्निर्वहत्युत ।
अथ चेदभिवर्तेत राजार्थी बलवत्तरः ॥५॥
अराजकानि राष्ट्राणि हतवीर्याणि वा पुनः ।
प्रत्युद्गम्यातिपूज्यः स्यादेतदत्र सुमन्त्रितम् ॥६॥
अराजकं महत् पापं नास्ति दुःखं ततः परम् ।
राजा चेत् पश्यते राष्ट्रं कुशलं सर्वतो भवेत् ।
बलवान् हि प्रकुपितः कुर्यान् निःशेषतामपि ॥७॥
भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा ।
अथ या सुदुहा भवति नैव तां वितुदन्त्यपि ॥८॥

---

२b : राज्ञे° C
४a : प्रवृण्वते A
५d : राज्यार्थी GH
६c : °आभिपूज्यः C
८c : अथवा G

यदतप्तं प्रणमते न तत् सन्तापमर्हति ।
यत् स्वयं नमते दारु न तत् सन्नामयन्त्यपि ॥९॥

एतयोपमया वीर सन्नमेत बलीयसे ।
स प्रणामो महेन्द्राय यः प्रणामो बलीयसे ॥१०॥

तस्माद् राजा विधातव्यः सततं भूतिकामिना ।
न धनं नैव दाराश्च तेषां येषामराजकम् ।
पापो हि हरते वित्तं नित्यं साधोरराजके ॥११॥

यदा हृतधनो लोको राजानं परिमृग्यति ।
पापा ह्यपि तदा क्षेमं न लभन्ते कदाचन ॥१२॥

एकस्य हि द्वौ हरतो द्वयोर्बह्व एव च ।
अदासः क्रियते दासो ह्रियन्ते च बलात् स्त्रियः ॥१३॥

एतेनैव हि कार्येण प्रजापालो निरूपितः ।
धर्माधर्मविवेकार्थं स्वयमेव स्वयम्भुवा ॥१४॥

न राजा चेन्महाराज पृथिव्यां दण्डधारकः ।
शूले मत्स्यानिवापक्ष्यन् दुर्बलान् बलवत्तराः ॥१५॥

अराजकाः प्रजाः पूर्वं विनेशुरवनीपते ।
परस्परं भक्ष्यमाणा जले मत्स्याः कृशानिव ॥१६॥

---

९d : °नामयन्ति हि F
१०b : सन्नमते A
११e : वृत्तं eG
१२a : हृतबलो ABF
१३a : च (for हि) AF
१३d : क्रियन्ते A
१५a : चेत् ACFGH
१६a : पूर्वं not found in G
१६b : अवनिपते A

ततः सर्वा विनिश्चित्य समयं ताः प्रचक्रिरे ।
वाक्शूरः परुषो दण्डे परदारान् हरेच्च यः ॥१७॥
परस्वं वा हरेद्यस्तु स नस्त्याज्यो भविष्यति ।
विश्वासार्थं प्रजाः सर्वाः सर्वेषामप्यशेषतः ॥१८॥
तास्तथा समयं कृत्वा स्वयमेवाविचारयन् ।
ततो मिलित्वा ताः सर्वा ययुर्वार्ताः पितामहम् ॥१९॥

प्रजा ऊचुः

विनेश्वरं विनश्यामो भगवन्नीश्वरं दिश ।
पालिता येन वर्तेम पूजयेम च यं वयम् ॥२०॥
ब्रह्माहूय ततो राजन् मनुं वचनमब्रवीत् ।
प्रजाः पालय धर्मेण प्रजापालः स्वयं भव ।
यथा प्रजा न नश्यन्ति भवेयुर्धर्मतत्पराः ॥२१॥

मनुरुवाच

बिभेमि कर्मणः पापाद् राज्यं हि भृशदुस्तरम् ।
विशेषतो मनुष्येषु मिथ्यावृत्तिषु नित्यदा ॥२२॥
प्रजास्तदाब्रुवन् मा भैर्भर्ता त्वं भव नः प्रभो ।
पशूनामपि पञ्चाशद्धिरण्यस्य तथैव च ।
धान्यस्य दशमं भागं दास्यामः कोषवर्धनम् ॥२३॥
भवन्तमनुगच्छामो महेन्द्रमिव देवताः ।

---

१७c : वाक्च्छूरः G
: पुरुषो FGH
१८b : न त्याज्यो ACFG
१९b : एव व्यदारयन् AeFGH
२०b : दिशं F
२१a : ब्रह्माभूयः F
२३c : अधि ACDH
: पञ्चाशत् H

महाबलो महासत्त्वो दुष्प्रधर्षः प्रतापवान् ।
सुखे धास्यसि नः सर्वान् कुबेर इव नैर्ऋतान् ॥२४॥

प्रजाः सुरक्षिता धर्मं चरिष्यन्ति च यं प्रभो ।
चतुर्थस्तस्य वै भागस्तव नाम भविष्यति ॥२५॥

तेन धर्मेण महता सुखलब्धेन भावितः ।
पाह्यस्मान् सर्वतस्त्वं हि देवानिव शतक्रतुः ॥२६॥

विजयाय विनिर्याहि प्रतपन् रश्मिवानिव ।
मानं विधूय शत्रूणां धर्मो जयति नः सदा ॥२७॥

इत्युक्तः स महाराज मनुः परमधार्मिकः ।
विनिर्ययौ महातेजा बलेन महता वृतः ॥२८॥

महाबलो महासत्त्वो ज्वलन्निव स्वतेजसा ।
तस्य दृष्ट्वा महासत्त्वं महेन्द्रस्येव देवताः ।
अपि तत्रासिरे सर्वे धर्मे चैव ददुर्मनः ॥२९॥

ततो महीं परिपपौ पर्जन्य इव वृष्टिमान् ।
शमयन् सर्वतः पापान् स्वधर्मेषु च योजयन् ॥३०॥

एवं ये भूतिमिच्छेयुः पृथिव्यां मानवाः क्वचित् ।
कुर्यू राजानमेवाग्रे प्रजानुग्रहकारणात् ॥३१॥

नमस्येरंश्च तं भक्त्या शिष्या इव गुरुं सदा ।
देवा इव च देवेन्द्रं नरा राजानमन्तिके ॥३२॥

सत्कृतं स्वजनेनेह परोऽपि बहु मन्यते ।
स्वजनेन त्ववज्ञातं परैः परिभवन्त्युत ॥३३॥

---

२९e : अप (for अपि) H
३३c : अज्ञातं AC
३३d : परैरपि भवन्त्य° ABF
: अपि (for उत) G

राज्ञः परैः परिभवः सर्वेषामसुखावहः ।
तस्माच्छत्रं च पत्रं च वासांस्याभरणानि च ॥३४॥
भोजनान्यथ पानानि राज्ञे दद्युर्गृहाणि च ।
आसनानि च शय्याश्च सर्वोपकरणानि च ॥३५॥
गोप्ता तस्माद् दुराधर्षः स्मितपूर्वाभिभाषिता ।
आभाषितश्च मधुरं प्रतिभाषेत मानवान् ।
कृतज्ञः पितृभक्तः स्यात्संविभागी जितेन्द्रियः ॥३६॥

इति श्रीपद्मपुराणे स्वर्गखण्डे राष्ट्रकरणीयं षट्त्रिंशत्तमोऽध्यायः ॥३६॥

---

३५a : भोजनान्न° G
३५b : राज्ञो A
३५c : शय्यानि F
पुष्पिका : इत्यादिमहापुराणे पाद्मे A
पञ्चत्रिंशो° A
F adds नाम after °करणीयं

## ३७

मान्धातोवाच

केन भूतानि वर्धन्ते क्षयं गच्छन्ति केन वा ।
कमर्चयन्तो देवर्षे सुखमव्ययमाप्नुयुः ॥१॥

नारद उवाच

राजमूलो महाराज धर्मो लोकस्य लक्ष्यते ।
प्रजा राजभयादेव न खादन्ति परस्परम् ॥२॥
राजा ह्येवाखिले लोके समुदीर्णं समुत्सुकम् ।
प्रसादयति धर्मेण प्रसाद्यैष विराजते ॥३॥
यथा ह्यनुदये राजन् भूतानि शशिसूर्ययोः ।
अन्धे तमसि मग्नाः स्युरपश्यन्तः परस्परम् ॥४॥
यथा ह्यनुदके मत्स्या निराक्रन्दे विहङ्गमाः ।
विहरेयुर्यथाकामं विहिंसन्तः परस्परम् ॥५॥
विमथ्यातिक्रमेरंश्च विषह्यापि परस्परम् ।
अभावमचिरेणैव गच्छेयुर्नात्र संशयः ॥६॥
एवमेव विना राज्ञा विनश्येयुरिमाः प्रजाः ।
अन्धे तमसि मज्जेयुरगोपाः पशवो यथा ॥७॥
हरेयुर्बलवन्तोऽपि दुर्बलानां परिग्रहान् ।
हन्युर्व्यायच्छमानाश्च यदि राजा न पालयेत् ॥८॥
ममेदमिति लोकेऽस्मिन् न भवेत् संपरिग्रहः ।
न दारा न च पुत्रः स्यान्न धनं न परिग्रहः ।
विश्वग्लोपः प्रवर्तेत यदि राजा न पालयेत् ॥९॥

---

५a-६b : not found in G
५b : निराक्रान्ता CGH

यानं वस्त्रमलङ्कारान् रत्नानि विविधानि च ।
हरेयुः सहसा पापा यदि राजा न पालयेत् ॥१०॥
मातरं पितरं वृद्धमाचार्यमतिथिं गुरुम् ।
क्लिश्नीयुरपि हिंस्युर्वा राजा यत्र न पालयेत् ॥११॥
पतेद् बहुविधं शास्त्रं बहुधा धर्मचारिषु ।
अधर्मः परिवर्धेत राजा यत्र न पालकः ॥१२॥
वधबन्धपरिक्लेशो नित्यमर्थवतां भवेत् ।
ममत्वं च न विन्देयू राजा यत्र न पालकः ॥१३॥
अन्ताश्चाकाल एव स्युर्लोकोऽयं दस्युसाद् भवेत् ।
पतेयुर्नरकं घोरं राजा चेन्नैव पालयेत् ॥१४॥
न योनिदोषं मन्येत न कृषिर्न वणिक्पथः ।
मज्जेद् धर्मस्त्रयी न स्यान् न राजा चेन्निरूपितः ॥१५॥
न यज्ञाः संप्रवर्तेयुर्विधिवत् प्राप्तदक्षिणाः ।
अविवाहसमा जाया राजा यत्र न पालकः ॥१६॥
न वृषाः संप्रवर्तेरन्नुन्मथ्येरंश्च गर्गराः ।
घोषाः प्रणाशं गच्छेयुर्विना राज्ञोऽनुपालनम् ॥१७॥
त्रस्तमुद्विग्नहृदयं हाहाभूतमचेतनम् ।
क्षणेन विनशेत् सर्वं विना राज्ञोऽनुपालनम् ॥१८॥
हस्ताद् हस्तं परिमृषेद् भिन्देरन् सर्वसेतवः ।
भयार्तं विद्रवेत् सर्वं विना राज्ञोऽनुपालनम् ॥१९॥

---

१०a : माल्यं (for यानं) D
११a : पितरं not found in e
१२d : यत्र राजा G
 : पालयेत् (for न पालकः) F
१४c : नरके घोरे G
१५d : न वक्ता G
१६c : समाजा वा H जारा (for जाया) A अविवाहाः B
१७d : °पालकम् G
१८-१९ : not found in A

न संवत्सरसत्राणि तिष्ठेयुरकुतोभियाम् ।
विधिवद् दक्षिणावन्ति विना राज्ञोऽनुपालनम् ॥२०॥
ब्राह्मणाश्चतुरो वेदान् नाधीयीरंस्तपस्विनः ।
विद्यास्नाता व्रतस्नाता न स्युर्भूपालमन्तरा ॥२१॥
न लभेद् धर्मसंश्लेषं हतविप्रो हतो जनः ।
कर्ता सुस्थेन्द्रियो न स्यात् राजा यत्र न विद्यते ॥२२॥
अनघा न प्रवर्तेरन् भवेद् वै वर्णसङ्करः ।
दुर्भिक्षमाविशेद् राजन् भूपतेः पालनं विना ॥२३॥
विवृत्य हि यथाकामं गृहद्वाराणि शेरते ।
मनुष्या रक्षिता राजन् समन्तादकुतोभयाः ॥२४॥
नाक्रुष्टं सहते किञ्चित् कुतो वा हस्तलाघवम् ।
यदि राजा नः सम्यग् गां रक्षयत्यतिधार्मिकः ॥२५॥
स्त्रियश्च पुरुषा मार्गं सर्वालङ्कारभूषिताः ।
निर्भया प्रतिपद्यन्ते यदि रक्षति भूपतिः ॥२६॥
धर्ममेव प्रपद्यन्ते न हिंसन्ति परस्परम् ।
अनुगृह्णन्ति चान्योन्यं यदि रक्षति भूमिपः ॥२७॥
यजन्ते च महायज्ञैस्त्रयो वर्णाः पृथग्विधैः ।
युक्ताश्चाधीयते विद्यां यदि रक्षति भूपतिः ॥२८॥
वार्तामूलो ह्ययं लोकस्त्रय्या वै त्रायते सदा ।
तत् सर्वं वर्तते सम्यग् यदि रक्षति भूपतिः ॥२९॥

---

२०b : °भयम् A
२०c : विवदेद् C
२२c : सुस्थेन्द्रियश्च स्यात् H
२४c : राज्ञा GH
२५c : न G
२५d : अपि धार्मिकः AF अभिधार्मिकः CGH
२७-२८ not found in AF
२९c : सम्यक् CeH

यदि राजा धुरं श्रेष्ठमादाय वहति प्रजाः ।
महता बलयोगेन तदा लोकः प्रसीदति ॥३०॥
यस्याभावेन भूतानामभावः स्यात् परन्तप ।
भावे च भावो नित्यं स्यात् कस्तं न प्रतिपूजयेत् ॥३१॥
तस्य यो वहते भारं सर्वलोकसुखावहम् ।
तिष्ठेत् प्रियहिते राज्ञ उभौ लोकाविमौ जयेत् ॥३२॥
यस्तस्य पुरुषः पापं मनसाप्यनुचिन्तयेत् ।
असंशयमिह क्लिष्टः प्रेतोऽपि नरकं पतेत् ॥३३॥
न हि जात्ववमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥३४॥
कुरुते पञ्चरूपाणि कालयुक्तेन यः सदा ।
भवत्यग्निस्तथादित्यो मनुर्वैश्रवणो यमः ॥३५॥
यदा ह्यासीदतः पापान् दहत्युग्रेण तेजसा ।
मिथ्योपचारितां राजा तदा भवति पावकः ॥३६॥
यदा पश्यति चारेण सर्वभूतानि भूमिपः ।
क्षेमं च कृत्वा व्रजति तदा भवति भास्करः ॥३७॥
अशुचींस्तु यदा क्रुद्धः क्षिणोति शतशो नरान् ।
सपुत्रपौत्रान् सामात्यान् तदा भवति सोऽन्तकः ॥३८॥
यदि त्वधार्मिकान् सर्वांस्तीक्ष्णैर्दण्डैर्नियच्छति ।
धार्मिकांश्चानुगृह्णाति भवत्यथ यमस्तदा ॥३९॥

---

३२a : हरते (for वहते) D
३२c : राजन् A
३३a : शापं G
३३b : मनस्यप्य° D मनसा परि° AF
३६a : अति (for अतः) A
: पापं C

यदा तु धनधाराभिस्तर्पयत्युपकारिणः ।
आच्छिनत्ति च रत्नानि विविधान्यपराधिनाम् ॥४०॥
श्रियं ददाति कस्मैचित् कस्माच्चिदपकर्षति ।
तदा वैश्रवणो राजा लोके भवति भूमिप ॥४१॥
नास्यापराधे स्थातव्यं दक्षेणाक्लिष्टकर्मणा ।
धर्म्यमाकाङ्क्षता लोकमीश्वरस्यानसूयता ॥४२॥
नहि राज्ञः प्रतीपानि कुर्वन् सुखमवाप्नुयात् ।
पुत्रो भ्राता वयस्यो वा यद्यप्यात्मसमो भवेत् ॥४३॥
कुर्यात् कृष्णगतिः शेषं ज्वलनोऽनिलसारथिः ।
न तु राज्ञाभिपन्नस्य शेषं क्वचन दृश्यते ॥४४॥
तस्य सर्वाणि रक्ष्याणि दूरतः परिवर्जयेत् ।
मृत्योरिव जुगुप्सेत राजस्वहरणान्नरः ॥४५॥
नश्येदभिमृशन् सद्यो मृगः कूटमिव स्पृशन् ।
आत्मस्वमिव रक्षेत राजस्वमपि बुद्धिमान् ॥४६॥
महान्तं नरकं घोरमप्रतिष्ठमचेतनम् ।
पतन्ति चिररात्राय राजवित्तापहारिणः ॥४७॥
राजा भोजो विराट् सम्राट् क्षत्रियो भूपतिर्नृपः ।
एवं यः स्तूयते शब्दैः कस्तं नार्चितुमर्हति ॥४८॥
तस्माद् बुभूषुर्नियतो जितात्मा संजितेन्द्रियः ।
मेधावी श्रुतिमान् दक्षः संश्रयेत महीपतिम् ॥४९॥

---

४०d : °कारिणाम् C
४१d : भूमिपः D
४४b : ज्वलनानिल° F
४७d : °वृत्तानिहारिणः B °वित्तानिहारिणः F
४८a : राजा राजा G
: सम्राट् not found in G

कृतज्ञं प्राज्ञमक्षुद्रं दृढभक्ति जितेन्द्रियम् ।
धर्मनित्यं स्थितं स्थित्यां मन्त्रिणं पूजयेन्नृपः ॥५०॥

दृढभक्ति कृतप्रज्ञं धर्मज्ञं संयतेन्द्रियम् ।
शूरमक्षुद्रकर्माणमनिषिद्धजनमाश्रयेत् ॥५१॥

इति श्रीपद्मपुराणे स्वर्गखण्डे राजधर्मनिरूपणं नाम सप्तत्रिंशत्तमोऽध्यायः ॥३७॥

---

५.१b : °मजितेन्द्रियम् A

पुष्पिका:—इत्यादिमहापुराणे पाद्मे AF

षट्त्रिंशत्° A

नाम not found in CeGH

# ३८

मान्धातोवाच

पार्थिवेन विशेषेण किं कार्यमवशिष्यते ।
कथं रक्ष्यो जनपदः कथं ज्ञेयाश्च शत्रवः ॥१॥
कथं चारं प्रयुञ्जीत वर्णान् विश्वसयेत् कथम् ।
कथं भृत्यान् कथं दारान् कथं पुत्रांश्च नारद ॥२॥

नारद उवाच

राजवृत्तं महाराज शृणुष्वावहितोऽखिलम् ।
जितेन्द्रियो नरपतिर्बाधितुं शक्नुयादरीन् ॥३॥
न्यसेत गुल्मान् दुर्गेषु सन्धौ च नृपनन्दन ।
नगरोपवने चैव पुरोद्यानेषु चैव हि ॥४॥
संस्थानेषु च सर्वेषु पुरेषु नगरेषु च ।
मध्ये च नरशार्दूल तथा राजनिवेशने ॥५॥
प्रणिधींश्च ततः कुर्याद् जडान्धबधिराकृतीन् ।
पुंसः परीक्षितान् प्राज्ञान् क्षुत्पिपासाश्रमक्षमान् ॥६॥
अमात्येषु च सर्वेषु मित्रेषु विविधेषु च ।
पुत्रेषु च महाराज प्रणिदध्यात् समाहितः ॥७॥
पुरे जनपदे चैव तथा सामन्तराजसु ।
यथा न विदुरन्योन्यं प्रणिधेयास्तथा हि ते ॥८॥

---

२a : कथं वाचं G
३b : °श्रावहितोत्थितं AC
४b : कुरुनन्दन BCH
६a : कुर्यात् eH
७b : पुरेषु G
८c : रिपुः (for विदुः) ACFH

चरांश्च विद्यात् प्रहितान् परेण मनुजर्षभ ।
आपणेषु विहारेषु समाजेषु च भिक्षुषु ॥९॥
आश्रमेषु तथोद्याने पण्डितानां समागमे ।
देशेषु चत्वरे चैव सभास्वावसथेषु च ॥१०॥
एवं विचिनुयाद् राजा परचारं विचक्षणः ।
चारे हि विदिते पूर्वं हितं भवति भूमिप ॥११॥
यदा तु हीनं नृपतिर्विद्याद्वात्मानमात्मना ।
अमात्यैः सह संमन्त्र्य कुर्यात् सन्धिं बलीयसा ॥१२॥
अज्ञायमाने हीनत्वे सन्धिं कुर्यात् परेण वै ।
लिप्सुर्वा कश्चिदेवार्थं त्वरमाणो विचक्षणः ॥१३॥
गुणवन्तो महोत्साहा धर्मज्ञाः साधवश्च ये ।
सन्दधीत नृपस्तैश्च राष्ट्रं धर्मेण पालयन् ॥१४॥
उच्छिद्यमानमात्मानं ज्ञात्वा राजा महामतिः ।
पूर्वापकारिणो हन्याल्लोकद्विष्टांश्च सर्वशः ॥१५॥
यात्रामाज्ञापयेद् धीरः कल्यः स्पष्टबलः सुखी ।
पूर्वं दत्त्वा विधानं च यात्रायां नगरे तथा ॥१६॥
न च वश्यो भवेदस्य नृपो यश्चातिवीर्यवान् ।
हीनश्च बलवीर्याभ्यां कर्षयंस्तत्परो वसेत् ॥१७॥
राष्ट्रं च पीडयेच्छत्रोः शस्त्राग्निविषमूर्च्छनैः ।
अमात्यवल्लभानां च विवादांस्तस्य कारयेत् ॥१८॥
वर्जनीयं सदा युद्धं राज्यकामेन धीमता ।
उपायैस्त्रिभिरादानमर्थस्याह बृहस्पतिः ॥१९॥
सान्त्वेन च प्रदानेन भेदेन च नराधिप ।
यमर्थं शक्नुयात् प्राप्तुं तेन तुष्येत पण्डितः ॥२०॥

---

१०a : आरामेषु B
१२c : समं G
१६c : कृत्वा (for दत्त्वा) eFGH
१७b-१८d (विवादंस्त) not found in C
१८d : अस्य D

आददीत बलिं चापि प्रजाभ्यो नृपनन्दन ।
स षड्भागमपि प्राज्ञस्तासामेवाभिगुप्तये ॥२१॥
दशधर्मगतेभ्यो यद् वसु बह्वल्पमेव च ।
तदाददीत सहसा पौराणां रक्षणाय वै ॥२२॥
यथा पुत्रास्तथा पौरा द्रष्टव्यास्तु न संशयः ।
भक्तिश्चैषां न कर्तव्या व्यवहारे प्रदर्शिते ॥२३॥
श्रोतुं चैव न्यसेद् राजा विप्रान् सर्वार्थदर्शिनः ।
व्यवहारेषु सततं तत्र राज्यं प्रतिष्ठितम् ॥२४॥
आकरे लवणे शुल्के तरे नागवने तथा ।
न्यसेदमात्यान् नृपतिः स्वाप्तान् वा पुरुषान् हितान् ॥२५॥
सम्यग् दण्डधरो नित्यं राजधर्ममवाप्नुयात् ।
राज्ञां हि सततं दण्डः सम्यग् धर्मः प्रशस्यते ॥२६॥
वेदवेदाङ्गवित् प्राज्ञः सुतपस्वी नृपो भवेत् ।
दानशीलश्च सततं यज्ञशीलश्च पार्थिव ॥२७॥
एते गुणाः समस्ताः स्युः सततं नृपतेः स्थिराः ।
व्यवहारलोपे नृपते कुतः स्वर्गोऽथवा यशः ॥२८॥
यो दण्डपीडितो राज्ञा भवेद् राजा बलीयसा ।
तदाभिसंश्रयेद् दुर्गं बुद्धिमान् पृथिवीपतिः ॥२९॥

---

२१a : बलं H
: चासौ (for चापि) G
२३a : सखा (for यथा) G
: पुत्रस्तथा पौरो ACFG
२३b : च (for तु) B
२४a : नमेद् B
२४b : प्राज्ञान् CDGH
२५d : प्राप्तान् वा AeF
२६b : राजा धर्मं H
२६c : पुत्रः (for दण्डः) F

घोषं न्यसेत मार्गेषु ग्रामानुत्सादयेदपि ।
प्रवेशयेच्च तान् सर्वाञ्छाखानगरकेष्वपि ॥३०॥
ये गुप्ताश्चैव दुर्गाश्च देशास्तेषु प्रवेशयेत् ।
धनिनो बलमुख्यांश्च सान्त्वयित्वा पुनः पुनः ॥३१॥
सस्याभिहारं कुर्याच्च स्वयमेव नराधिपः ।
असम्भवे प्रवेशस्य दहेद् दावाग्निना भृशम् ॥३२॥
क्षेत्रस्थेषु च सस्येषु शत्रोरुपजपेन् नरान् ।
विनाशयेद् वा तत् सर्वं रसेनाथ स्वकेन वा ॥३३॥
नदीषु मार्गेषु तथा संक्रमानवशातयेत् ।
जलं विस्तरयेत् सर्वमविश्राव्यं च दूषयेत् ॥३४॥
तदात्वेनायतीभिश्च निरस्येद् भूम्यनन्तरम् ।
प्रतिघातं परस्याजौ मित्रकार्येऽप्युपस्थिते ॥३५॥
दुर्गाणां चाभितो राजा मूलच्छेदं प्रकारयेत् ।
सर्वेषां क्षुद्रवृक्षाणां चैत्रवृक्षान् विवर्जयेत् ॥३६॥
प्रवृद्धानां च वृक्षाणां शाखाः प्रच्छेदयेत् तथा ।
चैत्यानां सर्वथा वर्ज्यमपि पत्रस्य पातनम् ॥३७॥
प्रगण्डीः कारयेत् सम्यगाकाशजननीस्तथा ।
आपूरयेच्च परिखां स्थाणुनक्रझषाकुलान् ॥३८॥
स्फटिकद्वारकाणि स्युरुच्छ्वासार्थे पुरस्य च ।
तेषां च द्वारवद् गुप्तिः कार्या सर्वात्मना भवेत् ॥३९॥
द्वारेषु च गुरूण्येव यन्त्राणि स्थापयेत् सदा ।
आरोपयेच्छतघ्नीश्च स्वाधीनानि च कारयेत् ॥४०॥

---

३०cd : सर्वान् शाखा° FGH
३४c : विस्तारयेत् D
३४d : अविस्राव° CDFGH अविश्राव° B
३६d : चैत्य° FH
३९b : परस्य G
४०d : प्रधानानि D

कार्याणि चाभिहार्याणि तथा कूपांश्च खानयेत् ।
संशोधयेत् तथा कूपान् कृतपूर्वान् पयोऽर्थिभिः ।।४१।।
तृणच्छन्नानि वेश्मानि पङ्केनाथ प्रलेपयेत् ।
निर्हरेच्च तृणं मासि चैत्रे वह्निभयात् तदा ।।४२।।
नक्तमेव तु भक्तानि पाचयेत नराधिपः ।
यदि वा ज्वालयेदग्निं वर्जयित्वाग्निहोत्रिकम् ।।४३।।
कर्मवरिष्ठशालासु ज्वलेदग्निः सुरक्षितः ।
गृहाणि च प्रविश्यान्तर्विचेयः स्याद्धुताशनः ।।४४।।
महान् दण्डश्च तस्यासीद् यस्याग्निर्वै दिवा भवेत् ।
प्रघोषयेदथैवं च रक्षणार्थं पुरस्य वै ।।४५।।
भिक्षुकांश्चाक्रियांश्चैव क्लीवोन्मत्तान् कुशीलवान् ।
बाह्यान् कुर्युर्नरश्रेष्ठ दोषाय स्युर्हितेऽन्यथा ।।४६।।
चत्वरेषु च तीर्थेषु सभास्वावसथेषु च ।
यथार्हवर्णं प्रणिधिं कुर्यात् सर्वत्र पार्थिवः ।।४७।।
विशालान् राजमार्गांश्च कारयीत नराधिपः ।
प्रपाश्च विपुलाश्चैव यथोद्देशं समाविशेत् ।।४८।।
भाण्डागारायुधागारान् योधागारांश्च सर्वशः ।
अश्वागारान् गजागारान् बलाधिकरणानि च ।।४९।।
परिखाश्चैव राजेन्द्र प्रतोली निष्कुटानि च ।
न जातु कश्चित् पश्येत गुह्यमेतन्नराधिप ।।५०।।
अर्थसन्निचयं कुर्याद् राजा परबलार्दितः ।
तैलं रसा मधुघृतमौषधानि च सर्वशः ।।५१।।

---

४१b : कूपानि BF
: खातयेत् F
४६b : क्रीडोन्मत्तान् G
४८c : विपलाश् B विपलांश् CDFGH
४९b : योधा° CeFGH
५१a : कुर्यात् B

अङ्गारकुशमुञ्जानां पलाशशरवर्णिनाम् ।
यवसेन्धनदिग्धानां कारयीत च सञ्चयान् ।।५२।।

आयुधानां च सर्वेषां शक्त्यृष्टिप्रासचर्मणाम् ।
सञ्चयानेवमादीनां कारयीत नराधिपः ।।५३।।

औषधानि च सर्वाणि मूलानि च फलानि च ।
चतुर्विधांश्च वैद्यान् वै संगृहूणीयाद् विशेषतः ।।५४।।

नटाश्च नर्तकाश्चैव मत्ता मायाविनस्तथा ।
शोभयेयुः पुरवनं मोदयेयुश्च सर्वशः ।।५५।।

यतः शङ्का भवेच्चापि भृत्यतो वापि वन्दितः ।
पौरेभ्यो नृपतिर्वापि स्वाधीनान् धारयीत तान् ।।५६।।

कृते कर्मणि राजेन्द्र पूजयेद् धनसञ्चयैः ।
दानेन च यथार्हेण सान्त्वेन विविधेन च ।।५७।।

निर्वेदयित्वा तु परं हत्वा वा नृपनन्दन ।
गतानृण्यो भवेद् राजा यथा शास्त्रे निदर्शितम् ।।५८।।

राज्ञा सप्तैव रक्ष्याणि तानि चैव निबोध मे ।
आत्मामात्याश्च कोषश्च दण्डा मित्राणि चैव हि ।।५९।।

तथा जनपदाश्चैव पुरं च मनुजर्षभ ।
एतत् सप्तात्मकं राजन् परिपाल्यं प्रयत्नतः ।।६०।।

---

५३b : °पास° F
५४d : गृह्णीयात् B
५५c : परबलं CFGH
५६b : मन्त्रितः GH
५७c : यथार्तेन G
५८a : च (for तु) DG
५९c : कोशाश्च F
५९d : दण्डे BFGH
६०c : (सप्तात्°)-६२a (यत्) not found in C

षाड्गुण्यं च त्रिवर्गं च त्रिवर्गं परमं तथा ।
यो वेत्ति पुरुषव्याघ्र स भुङ्क्ते पृथिवीमिमाम् ॥६१॥
षाड्गुण्यमिति यत् प्रोक्तं तन्निबोध नरर्षभ ।
शयनासनमित्येव यात्रासन्धानमेव च ॥६२॥
प्रगृह्यासनमित्येव यात्रां स परिगृह्यते ।
द्वैधीभावस्तथान्येषां संशयोऽथ परस्य च ।
त्रिवर्गश्चापि यः प्रोक्तस्तमिहैकमनाः शृणु ॥६३॥
क्षयस्थानं च वृद्धिश्च त्रिवर्गः परमस्तथा ।
धर्मश्चार्थश्च कामश्च सेवितव्योऽथ कालतः ॥६४॥
धर्मेण च महीपालश्चिरं पालयते महीम् ।
इत्युक्ता राजधर्मास्ते राज्ञां परममङ्गलाः ॥६५॥
यश्च पृष्टस्त्वया राजन् प्रलयोऽस्य महामते ।
तमपि प्रति वक्ष्यामि मान्धातः प्रक्रमेण वै ॥६६॥

इति श्रीपद्मपुराणे स्वर्गखण्डे राजसाधारणधर्मो नामाष्टत्रिंशत्तमोऽध्यायः ॥३८॥

---

६२a : षड्गुण्यं CeH
६३b : संपरिगृह्यते D
६४d : सेवितव्याथ eFH
६६a : दृष्टः F
६६b : प्रलयश्च D
पुष्पिकाः—अष्टात्रिंशोऽध्यायः G.
The whole chapter is not found in A

## ३९

नारद उवाच

कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ।
दिव्यमेकं युगं ज्ञेयं तस्य या चैकसप्ततिः ॥१॥
मन्वन्तरं तु तज्ज्ञेयं ते च यत्र चतुर्दश ।
स कल्पो नाम वै कालस्तदन्ते प्रलयस्ततः ॥२॥
सा ब्रह्मरात्री राजेन्द्र यत्र शेतेऽम्बुजासनः ।
त्रयो लोकास्तदा राजन् लीयन्ते तन्निमित्ततः ॥३॥
नैमित्तिको लयो नाम दैनन्दिन इतीर्यते ।
एवं दिनप्रमाणेन ब्रह्मणः शतवार्षिकम् ॥४॥
आयुः पूर्वपरार्धे तु परार्धे द्वे प्रकीर्तिते ।
द्विपरार्धे व्यतीते तु ब्रह्मणो जगदात्मनः ॥५॥
तदा प्रकृतयः सप्त प्रलयं यान्ति भूमिप ।
लयः प्राकृतिको ह्येष लीने ब्रह्मणि भूपते ॥६॥
अण्डकोषोऽपि सकलः प्रलयं याति सर्वशः ।
पूर्वरूपं तु वक्ष्यामि प्रलयस्यास्य भूपते ॥७॥
शतवर्षाणि भूमौ हि पर्जन्यो नैव वर्षति ।
दुर्भिक्षे निर्जले लोके प्रजाः सर्वाः क्षुधार्दिताः ।
परस्परं भक्ष्यमाणाः क्षयं यास्यन्ति भूमिप ॥८॥
समुद्रे च धरण्यां च वृक्षेषु च लतासु च ।
देहे च यो रसस्तं हि रविर्हरति रश्मिभिः ॥९॥

---

२a : तत् ज्ञेयम् ABCD
२d : तु यः CGH
७a : °कोषेऽपि C
८c : निर्जने G

ततः संवर्तको नाम ज्वालामाली हुताशनः ।
सङ्कर्षणमुखोत्पन्नो दहत्यनिलसारथिः ॥१०॥
सर्वं ब्रह्माण्डभाण्डं वै तत्कालक्षोभगर्जितः ।
एवं दग्धं महाराज वह्न्यर्काभ्यां समन्ततः ।
दग्धगोमयपिण्डाभं ब्रह्माण्डं सारवर्जितम् । ११॥
प्रचण्डपवनो राजंस्ततो वर्षशतं पुनः ।
संवर्तको नाम महान् ब्रह्माण्डं चालयिष्यति ॥१२॥
ततो मेघा महाघोरा नानावर्णा अनेकशः ।
शतं वर्षाणि वर्षन्ति गर्जन्ति च महास्वनाः ॥१३॥
एकोदकं ततो विश्वं निर्बीजं निर्विकारकम् ।
भूमेर्गन्धगुणं राजन् ग्रसन्त्यापः समन्ततः ॥१४॥
गुणनाशात् स्वयं पृथ्वी प्रलयं प्राप्स्यते तदा ।
तेजस्त्वपां रसगुणं सगन्धं पिबते बलात् ॥१५॥
ततः प्रलयमायान्ति राजन्नापोऽपि तत्क्षणात् ।
तेजसस्तु ततो रूपं रसगन्धसमन्वितम् ।
वायुर्हरति चण्डात्मा तेजः प्रलयमृच्छति ॥१६॥
आकाशस्तु ततो वायोः स्पर्शं परगुणैः सह ।
समादत्ते महाराज सोऽम्बरेऽथ प्रलीयते ॥१७॥
आकाशस्य गुणं शब्दं गुणैरन्यैः समन्वितम् ।
अहङ्कारः समादत्ते नभस्तस्मिन् प्रलीयते ॥१८॥
तैजसेस्विन्द्रियाण्यङ्ग देवा वैकारिका तथा ।
अहङ्कारे प्रलीयन्ते जगदेतच्चराचरम् ॥१९॥
अहङ्कारं भक्षयन्ति ततः सत्त्वादयो गुणाः ।
ग्रसते तान् महाराज याद्या प्रकृतिरुच्यते ॥२०॥

---

१०c : शंकर्षण° F
१६f : इच्छति ABF
२०d : आद्या C

न तस्याः कालदोषेण परिणामो नरर्षभ ।
आद्यन्तरहिता सा हि नित्यं कारणमव्ययम् ।
शक्तिर्भगवतः सा हि तदेकपरमायणा ॥२१॥
इत्युक्तः प्रलयो राजन् विश्वस्यास्य महामते ।
यथोत्पत्तिः क्रमेणास्य व्युत्क्रमेण लयस्तथा ॥२२॥
अहं तावद् गमिष्यामि शक्रलोकदिदृक्षया ।
स्वस्त्यस्तु ते महाराज धर्मानेतान् समाचर ॥२३॥

शेष उवाच

इत्यामन्त्र्य महाभाग देवर्षिरमितद्युतिः ।
पश्यतस्तस्य मान्धातुरम्बरं प्रत्यपद्यत ॥२४॥
यमुनान्तर्जले तप्यन् सौभरिर्मुनिसत्तमः ।
ददर्श मीनराजस्य शकुलस्य विचेष्टितम् ॥२५॥
पोताधानं समालम्ब्य शकुलः परितो भ्रमन् ।
हर्षेण महताविष्टः सौभरेरन्तिकं ययौ ॥२६॥
तं दृष्ट्वा सौभरिर्विद्वानपि मोहमवाप्तवान् ।
गार्हस्थ्यं शकुलस्येव करिष्यामीति मारिष ॥२७॥
तत उत्थाय सलिलादुद्वहिष्यन् स तापसः ।
मान्धातारं समागत्य कन्यामेकामयाचत ॥२८॥

मान्धातोवाच

पञ्चाशदस्ति मे कन्यास्तासु या स्वयमेव हि ।
वृणुयात् त्वां गृहाण त्वं मुनिवर्य स्वयंवरे ॥२९॥

---

२१e : भागवतः ABG
२२b : महीपते G
२२d : तदा G
२९ab : कन्याः तासु ABF
२९c : त्वं गृहाण G

तच्छ्रुत्वा वचनं तस्य चिन्तयामास सौभरिः ।
दृष्ट्वा प्रवयसं वृद्धमस्थिलीनं कुरूपकम् ॥३०॥
काशपुष्पप्रतीकाशकेशबद्धजटाकुलम् ।
वलीपलितसर्वाङ्गं का मां वरयते स्वयम् ॥३१॥
न ददामीति राजा यन्नोवाच स्वमुखेन वै ।
कन्या एव वदिष्यन्ति राज्ञस्तद् वचनं किल ॥३२॥
इति ध्यानपरो विष्णुं मनसा स्मृत्य सौभरिः ।
जगृहे परमं रूपं ललनानां मनोहरम् ॥३३॥
द्वितीयमिव कन्दर्पं सुनामं सुन्दरभ्रुवम् ।
ततो विवेश स मुनिस्तस्यान्तःपुरमात्मवान् ॥३४॥
ददृशुस्तं ततः कन्याः राज्ञः पञ्चाशदेव हि ।
सर्वास्तं मेनिरे ब्रह्मन् पतिरेष भवेन्मम ॥३५॥
तास्ततो ज्ञापयामासुः पितरं स्वविचेष्टितम् ।
राजापि ता ददौ तस्मै कन्याः पञ्चाशदेव हि ।
स गृहीत्वा ययौ कन्याः मुनिः सौभरिरात्मवान् ॥३६॥
राजा तु परमोदारः कृत्वा राज्यमखण्डकम् ।
अश्वमेधैश्च बहुभिरीजे परमधार्मिकः ॥३७॥
नारदेनोपदिष्टांश्च धर्मान् वर्णेषु सर्वतः ।
प्रचारयामास नृपश्चकार जयघोषणाम् ॥३८॥
यावती भासिता भूमिर्मयूखैस्तु विवस्वतः ।

---

३०a : तत् श्रुत्वा ACeFH
३५c : ता D
३५c-३६d : not found in F
३७b : अकण्टकं G
३८c : ततः (for नृप) G
३९b : यथार्थैः (for मयूखैः) G

तावदेव तु मान्धातू राज्यमासीन् महीभुजः ॥३९॥
स आत्मजेषु विन्यस्य राज्यमेकातपत्रकम् ।
योगेन देहमुन्मुच्य शक्रस्याभूत् सखा द्विज ॥४०॥
इति ते कथितं विप्र यत्पृष्टोऽहमिह त्वया ।
मानं दिवोऽथ राज्ञां च चरितं स्वर्गगामिनाम् ।
यच्छ्रुत्वा परमं क्षेमं भूयः किं श्रोतुमिच्छसि ॥४१॥

**व्यास उवाच**

शेषभाषितमेतत् ते दिवो मानं समीरितम् ।
पातालस्य च मानं ते वक्ष्ये तद्भाषितं पुनः ॥४२॥

**सूत उवाच**

एतद् वः कथितं विप्राः स्वर्गखण्डं महार्थकम् ।
श्रवणात् पठनादस्य स्वर्गलोको न दुर्लभः ॥४३॥
निष्कामस्य तथा मुक्तिर्भक्तिर्भक्तिमतामिह ।
कीर्तितव्यं ततो यत्नात् स्वर्गखण्डं सदा बुधैः ॥४४॥

इति श्रीपद्मपुराणे स्वर्गखण्डे मान्धातृनारदसंवादे मान्धातृस्वर्गारोहणं नामोनचत्वारिंशत्तमोऽध्यायः ॥३९॥

---

३६d : महीपते C
४०a : आत्मजेषु स G
४१e : यत् श्रुत्वा ACeFH
: पुण्यं (for क्षेमं) D
४४b : भक्तिः not found in G
४४d : तदा ABCF
पुष्पिका:—इत्यादिमहापुराणे पाद्मे A
मान्धातृ . . . संवादे not found in CeFGH
एकोनचत्वारिंशोऽध्यायः F
ऊनचत्वारिंशोऽध्यायः G
नाम ऊन° CeH
सप्तत्रिंशत्° A

# ४०

सूत उवाच

अत्र प्रोक्तं द्विजश्रेष्ठा दिवो मानप्रसङ्गतः ।
दुष्यन्तस्य तु राजर्षेश्चरितं मृगयादिकम् ॥१॥
धावतोऽनु मृगं तस्य शकुन्तलावलोकनम् ।
मेनकायां ततो जन्म ऋषेस्तस्यास्तु कौशिकात् ॥२॥
गान्धर्वेण विवाहोऽस्या गर्भाधानं च धर्मतः ।
स्वपुरागमनं राज्ञो दत्त्वाभिज्ञाङ्गुरीयकम् ॥३॥
शकुन्तलाया विस्मृत्यै शापो दुर्वाससस्ततः ।
कण्वस्यानुज्ञया तस्याः प्रस्थानं च पतिं प्रति ॥४॥
सरस्वत्या जले स्नानमभिज्ञानस्य मज्जनम् ।
राजद्वारेऽथ संवादः कीर्तितः कण्वशिष्ययोः ॥५॥
राज्ञः पुरोहितेनैव प्रवेशस्तस्य चान्तिके ।
शकुन्तलापरित्यागो राज्ञोऽप्यस्मृतिकारणात् ॥६॥
ततो मेनकया तस्याः प्रत्याहारोऽम्बरं प्रति ।
बन्धनं धीवरस्याथ ततोऽभिज्ञानदर्शनम् ॥७॥
दुष्यन्तस्यानुतापश्च वणिग्वृत्तान्तकीर्तनम् ।
दानवानां विनाशाय प्रयाणं त्रिदिवाय च ॥८॥

---

२d : च (for तु) DH
४a : शकुन्तलायां C
४d : प्रयातायाः (for प्रस्थानं च) ABCFG
६d : राज्ञा G
७a : मेनकाया A
८d : त्रिदिवस्य A

प्रत्यायातस्य राजर्षेः स्वसुतालोकनं वने ।
मारीचेन समागत्य भार्यापुत्रसमर्पणम् ॥९॥
चरितं भरतस्याथ दौष्यन्तेः सुमहात्मनः ।
संवादो देवदूतानां विष्णुदूतस्य संगमः ।
सुनन्देनाथ संवादो कथितो बहुविस्तरः ॥१०॥
दिवो मानं समासेन स्वर्गाणां च निरूपणम् ।
पतत्रिणां च भूतानां गतिशक्तिनिरूपणम् ॥११॥
कारणं च पिशाचत्वे गुह्यकानां तथा स्थितिः ।
गन्धर्वलोककथनं गन्धर्वत्वस्य कारणम् ॥१२॥
विद्याधराणां लोकश्च तेषां पुण्यं च कीर्तितम् ।
ततश्चाप्सरसां स्थानं पुण्यं च कथितं द्विजाः ॥१३॥
पुरूरवस आख्यानं वैकुण्ठगमनं ततः ।
लोकादप्सरसां तस्य यागपुण्यसमर्पणात् ॥१४॥
वर्णनं सूर्यलोकस्य शक्रलोकस्य च द्विजाः ।
तत्प्राप्तिसाधनं प्रोक्तं वह्निलोकस्ततः परम् ॥१५॥
तल्लोकसाधनं चैव तस्य विश्वानराज्जनिः ।
रुद्रजन्म ततः प्रोक्तं यमलोकस्य वर्णनम् ॥१६॥
नैर्ऋतानां च लोकस्य जन्म नैर्ऋतदिक्पतेः ।
वरुणस्य ततः स्थानं जन्म तस्य महात्मनः ॥१७॥
वर्णनं वायुलोकस्य जन्म वायोर्दितेर्द्विजाः ।
अलकावर्णनं तत्र कुबेरस्य च संकथा ॥१८॥

---

११d : गतिमुक्ति° C
१२a : कारणत्वं A
१४a : पुरूरवसमाख्यानं D
१४a-१५b : not found in F
१६b : जनैः A

रावणस्य ततो जन्म धनदस्य च तेन वै ।
निस्सारणं च लङ्काया अलकायां निवेशनम् ॥१९॥
कैलासवर्णनं चैव भूतादीनां निवेशनम् ।
वर्णनं चन्द्रलोकस्य मरीचेर्जन्म तस्य वै ॥२०॥
ताराया हरणं दर्पात् ततो जन्म बुधस्य च ।
दक्षशापश्च शीतांशौ ताराग्रहनिरूपणम् ॥२१॥
क्रमेण स्थानकथनं तेषां विप्रा यथा दिवि ।
छायायां च शनेर्जन्म कीर्तितं सप्रसङ्गकम् ॥२२॥
सप्तर्षिमण्डलं पश्चाद् ध्रुवलोकस्य वर्णनम् ।
ध्रुवस्य चरितं बाल्ये सुरुच्या वचनाद् द्विजाः ॥२३॥
वनप्रयाणं ध्यानं च वरदानं च विष्णुना ।
राज्यलाभः पुनस्तस्य स्वर्लोकारोहणं द्विजाः ॥२४॥
महर्लोकादिकथनं वैकुण्ठस्य च वर्णनम् ।
स्वर्गलोकस्थितानां च राज्ञां नामानुकीर्तनम् ॥२५॥
सगरस्य ततो जन्म यवनानां च संभवः ।
वरदानान् महेशस्य राजर्षेर्बहुपुत्रता ॥२६॥
अश्वमेधे ततस्तेषां तुरङ्गान्वेषिणां वधः ।
कपिलेनाथांशुमता हयप्राप्तिर्महात्मनः ॥२७॥
भगीरथेन गङ्गायाः पृथिव्यामवतारणम् ।
धुन्धुमारस्य चरितं धुन्धोर्जन्म च कीर्तितम् ॥२८॥
औशीनरस्य चरितं कपोतश्येनयोस्तथा ।
स्वमांसदानान् मोक्षश्च श्येनात्तस्य पतत्रिणः ॥२९॥

---

१९a : वरुणस्य A
१९d : अलकाया DGH
२२d : सप्रसङ्गता AF
२७b : °आन्वेषिणो C
२७c : °आंशुमतो H
२९c : च not found in A

स्वपुत्रच्छेदनं तस्य वरप्राप्तिश्च वेधसः ।
मरुत्तयज्ञकथनं संवर्तस्य तपोबलम् ॥३०॥
दिवोदासस्य चरितं काशीपुरनिवेशनम् ।
ततो राज्ञां बहूनां च चरितं स्वर्गकारणम् ॥३१॥
मान्धातुश्चरितं पश्चात् तस्य जन्म च कीर्तितम् ।
नारदेनास्य संवादः कीर्तितो बहुविस्तरः ॥३२॥
विश्वसृष्टिश्च वर्णानां चतुर्णां धर्मवर्णनम् ।
योगधर्मस्ततः प्रोक्तः प्रशंसा क्षत्रधर्मके ॥३३॥
सदाचारोऽप्याह्निकं च परलोकस्य साधनम् ।
भक्ष्याभक्ष्यविचारश्च कृत्याकृत्यनिरूपणम् ॥३४॥
आयुषः क्षयवृद्धी च जीवनं च गतायुषः ।
ब्रह्मकेतोर्विश्वकेतुसुतस्य परिकीर्तितम् ॥३५॥
दक्षशापस्ततो रुद्रे दक्षयज्ञस्ततः परम् ।
सतीदेहपरित्यागो यज्ञस्य मथनं ततः ॥३६॥
यज्ञस्य पुनरुद्भावः स्वर्गप्राप्त्युचिताः क्रियाः ।
कर्मणां निन्दितानां च कीर्तनं नरकाय वै ॥३७॥
श्राद्धे दाने च विप्राणां पात्रापात्रनिरूपणम् ।
राष्ट्रस्य करणीयं च राजधर्मनिरूपणम् ॥३८॥
राजसाधारणो धर्मः प्रलयस्य च लक्षणम् ।
विवाहः सौभरेः प्रोक्तो मान्धातुः स्वर्गसंगमः ॥३९॥

---

३०a : तस्य not found in F
३०d : ततो बलम् AB
३३d : क्षात्र° H
३६d : कथनं G
३७b : °प्राप्मुचितां BFH °प्राप्मुचिताः C
३९c : वैवाहः C
३९d : स्वर्ग एव च G

एतद् वः कीर्तितं विप्रा अस्यानुक्रमसूचनम् ।
अध्यायस्यास्य पाठेन स्वर्गखण्डफलं लभेत् ॥४०॥
प्रथमं सृष्टिखण्डं तु द्वितीयं भूमिखण्डकम् ।
तृतीयमेतत् कथितं स्वर्गखण्डं हि पावनम् ॥४१॥
प्रधानं सर्वधर्माणां स्वर्गाणामनुकीर्तनम् ।
राजर्षीणां पुण्यकृतां कीर्तनं पापनाशनम् ॥४२॥
विष्णोश्च महिमा विप्राः सम्यगेवानुकीर्तितः ।
श्रद्धया यः पठेद् विप्राः खण्डमेतदनुत्तमम् ।
शृणुयाद् वा नरः सोऽपि देवानां सुप्रियो भवेत् ॥४३॥
पुराणमेतत् पद्माख्यं सर्वत्र शुभदं नृणाम् ।
वैष्णवानां महाभागाः सततं परमप्रियम् ॥४४॥
इति श्रीपद्मपुराणे स्वर्गखण्डेऽनुक्रमवर्णनं नाम चत्वारिंशत्तमोऽध्यायः ॥४०॥

समाप्तमिदं स्वर्गखण्डम्

---

४०d : भवेत् H
४१ : not found in A
४१d : तु B
४३a : विप्र DH
पुष्पिका : इत्यादिमहापुराणे पाद्मे तृतीये पर्वणि A
नामाष्टत्रिंशत्° A
Post Colophon:
अस्यानन्तरं पातालखण्डं भविष्यति CeGH
श्रीहरिः B
इति D
श्रीरस्तु लेखके पाठके च F
पुस्तकमिदं श्रीयुक्तबाबु काशीनाथ शर्मा G
श्रीराधावृन्दावनचन्द्राभ्यां नमः । लिखितं श्रीनीलकान्तशर्मणा H

# APPENDIX—A

# WORD INDEX

# शब्दसूची

## ख



## ग

य



र

स

ह

# INDEX OF VERSES

## श्लोकानुक्रमणिका

इ

ई

द

ध

प

फ



ब

भ

श

ष

ह

## APPENDIX—B

### ग्रन्थपञ्जी

### BIBLIOGRAPHY


Abhijñānaśakuntala of Kālidāsa--Edited by A. B. Gajendragadkar, Third edition, Surat, 1946.

Agni-purāṇa—Edited by Rajendralal Mitra, Bibliotheca Indica, Calcutta, 1878.

Ancient Indian Historical Tradition—F. E. Pargiter, London, 1922.

Āpastamba dharma-sūtra (with the commentary of *Haradatta Miśra*)—Edited by A. Cinnasvāmī Śāstrī, Kashi Sanskrit Series, No. 93, Benares, 1932.

Āpastamba-śrauta-sūtra (with the *bhāṣya* of *Dhūrtasvāmī* and *vṛttis* of *Rāmāgnicit* and *Rudradatta*)—Edited by Śrīnivāsarāghavācārya, Oriental Research Institute, Sanskrit Series, Nos. 87, 98, 104, University of Mysore, 1960.

Āśvalāyana-gṛhya-sūtra (with the commentary entitled *anāvila* of *Haradattācārya*)—Edited by T. Gaṇapati Śāstrī, Trivandrum Sanskrit Series, No. 78, Trivandrum, 1923.

Atharva-veda-saṃhitā—Edited by R. Roth and W. D. Whitney, Berlin, 1924.

Bhāgavata-purāṇa (with the commentaries of *Śrīdharasvāmin*, *Jīva Gosvāmin* and others)—Edited and published by Nityasvarūpa Brahmacārin,

Vol. I (First and Second Skandha), Brindavana, Saṃvat 1959.

Vol. II (Third and Fourth Skandha), Brindavana, Saṃvat 1960.

Vol. III (Fifth, Sixth and Seventh Skandha), Brindavana, Saṃvat 1961.

Vol. IV (Eighth and Ninth Skandha), Brindavana, Saṃvat 1961.

Vol. V (Tenth Skandha), Brindavana, Saṃvat, 1963.

Vol. VI (Eleventh and Twelfth Skandha), Brindavana, Saṃvat 1964.

Bhaviṣya-purāṇa—Published by Kṣemarāja Śrīkṛṣṇadāsa, Veṅkaṭeśvara Press, Bombay, 1928,

Bṛhaspati-smṛti—Reconstructed by K. V. Rangaswami Aiyanger, and published in Gaekwad's Oriental Series, No. Lxxxv, Baroda Oriental Institute, 1941.

Bṛhat-saṃhitā of Varāhamihira—Edited by Kern, Bibliotheca Indica, Calcutta, 1865.

Catalogue of Sanskrit Manuscripts in the Library of His Highness Maharaja of Bikaner—R. L. Mitra, Calcutta, 1833.

Catalogue of Sanskrit Manuscripts in the Library of the Deccan College, Poona—Pt. II, R. G. Bhandarkar, Poona, 1884.

Catalogue of Sanskrit Manuscripts in Sarasvati Bhavana, Benares—Vol. V, Kuveranatha Sukla, Varanasi, 1958.

Catalogus Catalogorum—Theodor Aufrecht, Franz Steiner Verlag, Wiesbaden, 1962.

Catalogus Codicum Manuscriptorum Sanscriticorum Bibliothecae Bodleianae—Theodor Aufrecht, Oxonii, MDCCCLXIV.

Corpus Inscriptionum Indicarum—Vol. III, J. F. Fleet, Calcutta, 1888.

Descriptive Catalogue of the Sanskrit Manuscripts in the Government Collection Under the Care of the Asiatic Society—Vol. V, H. P. Śāstrī, Calcutta, 1928.

Descriptive Catalogue of Sanskrit Manuscripts in the Library of the India Office—Pts. I-VIII, Julius Eggeling, London, 1887-1904.

Descriptive Catalogue of the Sanskrit Manuscripts in the Vaṅgīya Sāhitya Pariṣad—Chintaharan Chakravarty, Calcutta, 1935.

Devī-purāṇa—Edited by Pañcānana Tarkaratna and published by the Vaṅgavāsī Press, Calcutta, 1311 B. S.

Encyclopædia of Religion and Ethics (in twelve vols.)—Edited by James Hastings, Edinburgh, 1908-1921.

Essays—Analytical, Critical and Philological—Vol. III, collected and edited by Dr. Reinhold Rost, London, 1864.

Gautama-dharma-sūtra (with the commentary entitled *mitākṣarāvṛtti* of *Haradatta*)—Published by Hari Nārāyaṇa Apte, Ānandāśrama Sanskrit Series, Poona, 1910.

Geschichte der indischen Literatur (in three vols.)—M. Winternitz, Leipzig, 1909-1920.

Haribhaktivilāsa of Gopālabhaṭṭa—Edited by Śyāmācaraṇa Kaviratna and published by Gurudas Chatterjee & Sons, Calcutta, 1318 B. S.

Harivaṃśa of Bhavānanda—Edited by S. C. Roy and published by the University of Dacca, 1939 B. S.

Harivaṃśa of Bhavānanda—Edited by Gaṅgā Govinda Śarmā, 1321 B.S.

Hindutva—Ramdas Gaud, Śivaprasāda Gupta, Kāśī, 1938.

History of Dharmaśāstra—Vol. I, P. V. Kane, Bhandarkar Oriental Research Institute, Poona, 1930.

History of Indian Literature—Vol. I, M. Winternitz, translated into English from the Original German by Mrs. S. Ketkar, published by the University of Calcutta, 1927.

History of Sanskrit Literature—Vol. I, S. N. Dasgupta and S. K. De, University of Calcutta, 1947.

Indian Architecture, (Buddhist and Hindu Periods)—Percy Brown, Second revised and enlarged edition, D. B. Taraporevala Sons & Co., Bombay, 1949.

Journal of American Oriental Society.

Journal of the Asiatic Society.

Journal of the Bombay Branch of the Royal Asiatic Society.

Journal of Oriental Research.

Journal of Royal Asiatic Society.

Kālikā-purāṇa—Edited by Pañcānana Tarkaratna and published by the Vaṅgavāsī Press, Calcutta, 1316 B. S.

Kavikaṅkaṇacaṇḍī of Mukundarāma Cakravartin, Vol. II—Edited by Dinesh Chandra Sen, Charuchandra Bandyopadhyaya and Hrishikesh Basu, University of Calcutta, 1926.

Khādira-gṛhya-sūtra (with the commentary of *Rudraskanda*)—Edited by A. Mahādeva Śāstrī and L. Śrīnivāsācārya, Government Oriental Library Series, Bibliotheca Sanskrit 41, Mysore, 1913.

Kirātārjunīya (with the commentary of *Mallinātha*)--Edited by Paṇḍita Durgāprasāda and Kāśīnātha Pandurang Parab and published by the Nirṇayasāgara Press, Bombay, 1895.

Kumārasambhava--Critically edited by Sūryakānta, Sahitya Academy, New Delhi, 1962.

Kūrma-purāṇa--Critically edited by A. S. Gupta and published by the All-India Kashiraj Trust, Varanasi, 1971.

Liṅga-purāṇa--Edited by Jīvānanda Vidyāsāgara, Calcutta, 1885.

Mahābhāṣya of Patañjali (with the commentaries of *Pradīpa* and *Udyota*)-Edited by Bhārgava Śāstrī and published in several volumes by Satyabhamabai Pandurang for the Nirṇayasāgara Press, Fifth edition, Bombay, 1951 ff.

Mahābhārata—For the first time critically edited, printed and published in several volumes by the Bhandarkar Oriental Research Institute, Poona, 1933 ff.

Manusmṛti (with the commentaries of *Medhātithi* and *Kullukabhaṭṭa*)—Published by Satīśacandra Mukherjee, Vasumatī Sāhitya Mandira, Fourth edition, Calcutta, 1336 B.S.

Matsya-purāṇa—Edited by Hari Nārāyaṇa Apte, Ānandāśrama Sanskrit Series, Poona, 1907.

Nāṭyaśāstra of Bharata—Edited by Paṇḍita Kedāranātha Sāhityabhūṣaṇa and published by Satyabhamabai Pandurang for the Nirṇayasāgara Press, Second edition, Bombay, 1943

Nāṭyaśāstra of Bharata—Edited by Maravalli Rāmakṛṣṇa Kavi in three volumes and published in Gaekwad's Oriental Series, Baroda, 1926-1954.

Narasiṃha-purāṇa—Edited by Uddhavācārya and published by Gopal Narayan & Co, Second edition, Bombay, 1911.

Nirṇaya-sindhu of Kamalākarabhatta—Edited by Vāsudeva Śarmā and published by the Nirṇayasāgara Press, Third edition, Bombay, Śaka 1848.

Padma-purāṇa—Published by Hari Nārāyaṇa Apte, Ānandāśrama Sanskrit Series, Poona, 1893-1894.

Vol. I (Ādi and Bhūmikhaṇḍa)

Vol. II (Brahma and Pātālakhaṇḍa)

Vol. III (Sṛṣṭikhaṇḍa)

Vol. IV (Uttarakhaṇḍa)

Padma-purāṇa—Edited by Kedāranātha Bhaktivinoda, Calcutta.

Padma-purāṇa—Śrīgurumaṇḍala Granthamālā, Calcutta, 1958-1959.

Padma-purāṇa—Edited in two volumes by Kṣemarāja Śrīkṛṣṇadāsa, Veṅkaṭeśvara Press, Bombay, Saṃvat 1814.

Padma-purāṇa, Bhūmikhaṇḍa—Manuscript no. G. 4423, Asiatic Society, Calcutta.

Padma-purāṇa, Pātālakhaṇḍa—Manuscript no. G. 4116, Asiatic Society, Calcutta.

Padma-purāṇa, Svargakhaṇḍa—Manuscript no. *Orient fol. 3174* (Sanskr.) acc. mss. 1912, 340, Staatsbibliothek, Marburg.

Padma-purāṇa, Svargakhaṇḍa—Manuscript belonging to the National Library, Calcutta.

Padma-purāṇa, Svargakhaṇḍa—Manuscript Cod. No. 114, Catalogus Codicum Manuscriptorum Sanscriticorum Bibliothecae Bodleianae.

Padma-purāṇa, Svargakhaṇḍa—Manuscript no. G 4416, Asiatic Society, Calcutta.

Padma-purāṇa, Svargakhaṇḍa—Manuscript no. 757, Vaṅgīya Sāhitya Pariṣad, Calcutta.

Padma-purāṇa, Svargakhaṇḍa—Manuscript no. G 4416A, Asiatic Society, Calcutta.

Padma-purāṇa and Kālidāsa—Haradatta Śarmā, Calcutta, 1924.

Padma-purāṇa—A Study—Asoke Chatterjee Śāstrī, Published under the auspices of the Government of West Bengal, Sanskrit College, Calcutta, 1967.

Pāraskara-gṛhya-sūtra (with the commentaries of *Harihara, Gadādhara*, and *Jayarāma*)—Kāśī Sanskrit Series, no 17, Benares, 1926.

Pitṛbhakti of Śrīdatta Upādhyāya—Critically edited by Asoke Chatterjee Śāstrī and published by the Chowkhamba Sanskrit Series, Benares, 1971.

Raghuvaṃśa (with the commentary of *Mallināth*a)—Edited by Vāsudeva Lakṣmaṇa Śāstrī Paṇaśīkara and published by the Nirṇayasāgara Press, Seventh edition, Bombay, 1929.

Rāmāyaṇa of Adbhutācārya—Edited by Rajanikanta Chakravarty and published by the Raṅgpur Sāhitya Pariṣad, 1320 B. S.

Rāmāyaṇa of Kṛttivāsa—Edited and published by Ramananda Chattopadhyaya, Eighth edition, Calcutta, 1353 B. S.

Rāmāyaṇa of Kṛttivāsa, Ādikāṇḍa—Edited by Nalinikanta Bhattashali and published by P. C. Lahiri, University of Dacca, 1936.

Śakuntalārahasya—Viharilal Sarkar, Calcutta, 1896.

Sāmaveda-saṃhitā—Edited by Damodara Satavalekar, Paradi, 1963.

Samaya-pradīpa of Śridatta Upādhyāya—Critically edited by Asoke Chatterjee Śāstrī, Bibliotheca Indica, Calcutta, 1972.

Śatapatha-brāhmaṇa—Edited by A. Weber, Otto Harrassowitz, Leipzig, 1924.

Śiśupālavadha (with the commentary of *Mallinātha*)—Vidyābhavana Sanskrit Granthamālā, Chowkhamba Vidyābhavana, Benares, 1965.

Śiva-purāṇa (Jñāna-saṃhitā)—Edited by Pañcānana Tarkaratna and published by the Vaṅgavāsī Press, Calcutta, 1314 B. S.

Śiva-purāṇa (Uttara-khaṇḍa)—Manuscript no. G 8393, Asiatic Society, Calcutta.

Skanda-purāṇa—Edited in seven parts (called khaṇḍas) by Kṣemarāja Śrīkṛṣṇadāsa, Veṅkaṭeśvara Press, Bombay, 1910.

Śrāddhakalpa of Śrīdatta Upādhyāya—Critically edited by Asoke Chatterjee Śāstrī and published by the Sanskrit University, Varanasi, 1971.

Śuklayajurveda-saṃhitā—Edited by Svāmī Bhagavadācārya, Delhi, Saṃvat 2016.

Taittirīya-saṃhitā (with the *bhāṣya* of *Sāyaṇācārya*)—Edited and published by Hari Nārāyaṇa Apte, Ānandāśrama Sanskrit Series, Poona, 1900.

Vaikhānasadharma-praśna—Edited by T. Gaṇapati Śāstrī, Trivandrum Sanskrit Series, No. 28, Trivandrum, 1913.

Vājasaneyī-saṃhitā (with the commentaries of *Uvaṭa* and *Mahīdhara*)—Edited by Vāsudeva Lakṣmaṇa Śāstrī Paṇaśīkara and published by Pandurang Jawaji, Nirṇayasāgara Press, Second edition, Bombay, 1929.

Vāmana-purāṇa—Critically edited by A.S. Gupta and published by the All-India Kashiraj Trust, Varanasi, 1967.

Varāha-purāṇa—Edited by Pañcānana Tarkaratna and published by the Vaṅgavāsī Press, Calcutta, 1313 B.S.

Vāsiṣṭha-rāmāyaṇa—Manuscript no. 259, Dacca University.

Vāyu-purāṇa—Edited and published by Hari Nārāyaṇa Apte, Ānandāśrama Sanskrit Series, Poona, 1905.

Vikramorvaśīya—Critically edited by H.D. Velankar, Sahitya Academy, New Delhi, 1961.

Viṣṇudharmottara (citrasūtra)—Critically edited by Asoke Chatterjee Śāstrī and published by the Sanskrit University, Varanasi, 1971.

Viṣṇu-purāṇa—Edited by Pañcānana Tarkaratna and published by the Vaṅgavāsī Press, Second edition, Calcutta, 1331 B. S.

Verzeichnis Orient, Hss., Suppl. 1, 1—Herausgegeben von Walther Schubring, beschrieben von Klaus Ludig Janert, Wiesbaden, 1965.

Viṣṇu-saṃhitā—Edited by T. Gaṇapati Śāstrī, Trivandrum Sanskrit Series, Trivandrum, 1925.

Woolner Commemoration Volume—Edited by Mohammad Shafi, Mehar Chand Lachman Das, Lahore, 1940.

Yājñavalkya-smṛti (with the commentary of *Aparārka*)—Edited in two parts by Hari Nārāyaṇa Apte, Ānandāśrama Sanskrit Series, Poona, 1903-1904.

Yājñavalkya-smṛti (with the commentary entitled *mitākṣarā* of *Vijñāneśvara*)—Edited by Vāsudeva Lakṣmaṇa Śāstrī Paṇaśīkara and published by the Nirṇayasāgara Press, Second edition, Bombay, 1918.

Yājñavalkya-smṛti (with the commentary of *Viśvarūpācārya*)—Edited by T. Gaṇapati Śāstrī and published under the authority of the Government of His Highness the Mahārājā of Travancore in two parts.

Part I (Ācāra and Vyavahāra adhyāya)—Trivandrum Sanskrit Series, No. Lxxiv, Trivandrum, 1922.

Part II (Prāyaścitta adhyāya)—Trivandrum Sanskrit Series, No. Lxxxi, Trivandrum, 1924.